भापकवत्, मनोयोगरहितवाग्योगवानेव वाग्योगी द्वीन्द्रियादिः, जघन्यत एक समयमुत्कर्षतोऽन्तर्मुहूर्त्तं, एतदपि सूत्रं विशिष्टवाग्द्रव्यग्रहणापेक्षमवसातव्यं, काययोगी वाग्योगमनोयोगविकल एकेन्द्रियादिः, जघन्यतोऽन्तर्मुहूर्त्तं, द्वीन्द्रियादिभ्य उद्धृत्य पृथिव्यादिष्वन्तर्मुहूर्त्तं स्थित्वा भूयः कस्यापि द्वीन्द्रियादिषु गमनात्, उत्कर्षतः प्रागुक्तस्वरूपो वनस्पतिकालः, अयोगी सिद्धः, स च साद्यपर्यवसितः । अन्तरचिन्तायां मनोयोगिनोऽन्तरं जघन्येनान्तर्मुहूर्त्तं, तत ऊर्द्ध्वं भूयो विशिष्टमनोयोग्यपुद्गलग्रहणसम्भवात्, उत्कर्षतो वनस्पतिकालः, तावन्तं कालं स्थित्वा भूयो मनोयोगिष्वागमनसम्भवात्, एवं वाग्योगिनोऽपि जघन्यत उत्कर्षतश्चान्तरं भावनीयं, औदारिककाययोगिनो जघन्यत एक समयं, औदारिकलक्षणं कायमपेक्ष्यैतत्सूत्रं, यतो द्विसामायिक्यामपान्तरालगतावेकः 'समयोऽन्तरं, उत्कर्षतोऽन्तर्मुहूर्त्तं, इदं हि सूत्रं परिपूर्णौदारिकशरीरपर्याप्तिपरिसमाप्त्यपेक्षं, तत्र विग्रहसमयादारभ्य यावदौदारिकशरीरपर्याप्तिपरिसमाप्तिस्तावदन्तर्मुहूर्त्तं, तत उक्तमुत्कर्षतोऽन्तर्मुहूर्त्तं, न चैतत्स्वमनीपिकाविजृम्भितं, यत आह **चूर्णिकृत्**—'कायजोगिस्स जह० एक्कं समयं, कहं ?, एकसामायिकविग्रहगतस्स, उक्कोसं अंतरं अंतोमुहुत्तं, विग्रहसमयादारभ्य औदारिकशरीरपर्याप्तकस्य यावदेवमन्तर्मुहूर्त्तं द्रष्टव्य"मिति, सूत्राणि ह्यमूनि विचित्राभिप्रायतया दुर्लक्ष्याणीति सम्यक्संप्रदायादवसातव्यानि, सम्प्रदायश्च यथोक्तस्वरूप इति न काचिदनुपपत्तिः, न च सूत्राभिप्रायमज्ञात्वा अनुपपत्तिरुद्भावनीया, महाशातनायोगतो महाऽनर्थप्रसक्तेः, सूत्रकृतो हि भगवन्तो महीयांसः प्रमाणीकृताश्च महीयस्तरैस्तत्कालवर्त्तिभिरन्यैर्विद्वद्भिस्ततो न तत्सूत्रेषु मनागप्यनुपपत्तिः, केवलं सम्प्रदायावसाये यत्नो विधेयः, ये तु सूत्राभिप्रायमज्ञात्वा यथा कथञ्चिदनुपपत्तिमुद्भावयन्ते ते महतो महीयस आशातयन्तीति दीर्घतरसंसारभाजः, आह च **टीकाकारः**—"एवं विचित्राणि सूत्राणि सम्यक्संप्रदायादवसेयानीत्यविज्ञाय तदभिप्रायं नानुपपत्तिचोदना कार्या, महाशा-

तनायोगतो महाऽनर्थप्रसङ्गादिति" एवं च ये सम्प्रति दुष्षमानुभावतः प्रवचनस्योपप्लवाय धूमकेतव इवोत्थिताः सकलकालसुकराव्यवच्छिन्नसुविधिमार्गानुष्ठातृसुविहितसाधुषु मत्सरिणस्तेऽपि वृद्धपरम्परायातसम्प्रदायादवसेयं सूत्राभिप्रायमपास्योत्सूत्रं प्ररूपयन्तो महाशातनाभाजः प्रतिपत्तव्या अपकर्णयितव्याश्च दूरतस्तत्त्ववेदिभिरिति कृतं प्रसङ्गेन । सम्प्रत्यल्पबहुत्वमाह—'एएसि णं'मित्यादि प्रश्नसूत्रं सुगमं, भगवानाह—गौतम! सर्वस्तोका मनोयोगिनो, देवनारकगर्भजतिर्यक्पञ्चेन्द्रियमनुष्याणामेव मनोयोगित्वात्, तेभ्यो वाग्योगिनोऽसङ्ख्येयगुणाः, द्वित्रिचतुरसञ्ज्ञिपञ्चेन्द्रियाणां वाग्योगित्वात्, अयोगिनोऽनन्तगुणाः सिद्धानामनन्तत्वात्, तेभ्यः काययोगिनोऽनन्तगुणाः वनस्पतीनां सिद्धेभ्योऽप्यनन्तत्वात् ॥

अहवा चउव्विहा सव्वजीवा पण्णत्ता, तंजहा—इत्थिवेयगा पुरिसवेयगा नपुंसगवेयगा अवेयगा, इत्थिवेयगा णं भंते! इत्थिवेदएत्ति कालतो केवचिरं होति?, गोयमा! (एगेण आएसेण०) पलियसयं दसुत्तरं अट्ठारस चोदस पलितपुहुत्तं, समओ जहण्णो, पुरिसवेदस्स जह० अंतो० उक्को० सागरोवमसयपुहत्तं सातिरेगं, नपुंसगवेदस्स जह० एकं समयं उक्को० अणंतं कालं वणस्सतिकालो । अवेयए दुविहे प०—सातीए वा अपज्जवसिते सातीए वा सपज्जवसिए से जह० एकं स० उक्को० अंतोमु० । इत्थिवेदस्स अंतरं जह० अंतो० उक्को० वणस्सतिकालो, पुरिसवेदस्स जह० एगं समयं उक्को० वणस्सइकालो, नपुंसगवेदस्स जह० अंतो० उक्को० सागरोव-

**मसयपुहुत्तं सातिरेगं, अवेदगो जहा हेट्ठा। अप्पाबहु० सव्वत्थोवा पुरिसवेदगा इत्थिवेदगा संखेज्जगुणा अवेदगा अणंतगुणा नपुंसगवेयगा अणंतगुणा॥ (सू० २५८)**

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण चतुर्विधाः सर्वजीवाः प्रज्ञप्तास्तद्यथा—स्त्रीवेदकाः पुरुषवेदका नपुंसकवेदका अवेदकाः। कायस्थितिचिन्तायां स्त्रीवेदकस्य 'एगेणं आएसेणं जह० एगं समय'मित्यादि पूर्वं त्रिविधप्रतिपत्तौ प्रपञ्चतो व्याख्यातमिति न भूयो व्याख्यायते, पुरुषवेदस्य जघन्यतोऽन्तर्मुहूर्त्तं, स्त्रीवेदादिभ्य उद्धृत्य पुरुषवेदानामन्तर्मुहूर्त्तं जीवित्वा भूयः स्त्रीवेदादिषु कस्यापि गमनात्। अथ यथा स्त्रीवेदस्य नपुंसकस्य वा उपशमश्रेणावुपशमे जाते तदनन्तरमेकं समयं तं वेदमनुभूय मृतस्यैकसमयता व्यावर्ण्यते तथा पुरुषवेदस्यापि जघन्यत एकसमयता कस्मान्न भवति?, उच्यते, उपशमश्रेण्यन्तर्गतो मृतः सर्वोऽपि पुरुषवेदेषूत्पद्यते नान्यवेदेषु, तेन स्त्रीवेदस्य नपुंसकवेदस्य चोक्तप्रकारेण जघन्यत एकसमयता लभ्यते, न पुरुषवेदस्य, तस्य जन्मान्तरेऽपि सातत्येन गमनात्, ततो जघन्यं पुरुषवेदस्योपदर्शितेनैव प्रकारेणेत्यन्तर्मुहूर्त्तं, उत्कर्षतः सागरोपमशतपृथक्त्वं सातिरेकं, तच्च देवमनुष्यतिर्यग्भवभ्रमणेन परिभावनीयो, नपुंसकवेदो जघन्यत एकं समयं, स चैकः समय उपशमश्रेणौ वेदोपशमानन्तरमेकं समयं नपुंसकवेदमनुभूय मृतस्य परिवेदितव्यं, मरणानन्तरं पुरुषवेदेषूत्पादात्, उत्कर्षतो वनस्पतिकालः, स च प्रागनेकधा दर्शितः, अवेदको द्विविधः—साद्यपर्यवसितः क्षीणवेदः सादिसपर्यवसित उपशान्तवेदः, स च जघन्यत एकं समयं, द्वितीये समये मरणतो देवगतौ पुरुषवेदसम्भवात्, उत्कर्षतोऽन्तर्मुहूर्त्तं, तदनन्तरं मरणतः पुरुषवेदसङ्क्रान्त्या प्रतिपाततो येन वेदेनोपशमश्रेणिं प्रतिपन्नस्तद्वेदोदयापत्त्या सवेदकत्वात्। अन्तरचिन्तायां स्त्रीवेदस्यान्तरं जघन्यतोऽन्तर्मुहूर्त्तं, तच्चोपशान्तवेदे पुनरन्तर्मुहूर्त्तेन स्त्रीवेदोदयापत्त्या, यदिवा स्त्रीभ्य उद्धृत्य पुरुषवेदेषु नपुं-

सक्रवेदेषु वाऽन्तर्मुहूर्त्तं जीवित्वा पुनः स्त्रीत्वेनोत्पत्त्या भावनीयं, उत्कर्षतो वनस्पतिकालः, पुरुषवेदस्यान्तरं जघन्यत एकं समयं, पुरुषवेदोपशमसमयानन्तरं मरणे पुरुषेष्वेवोत्पादात्, उत्कर्षतो वनस्पतिकालः, नपुंसकवेदस्य जघन्यतोऽन्तर्मुहूर्त्तं, तच्च स्त्रीवेदोक्तप्रकारेण भावयितव्यं, उत्कर्षतः सागरोपमशतपृथक्त्वं सातिरेकं, तत ऊर्ध्वं नियमतः संसारिणः सतो नपुंसकवेदोदयभावात्, अवेदकस्य साद्यपर्यवसितस्य नास्त्यन्तरमपर्यवसितत्वात्, सादिसपर्यवसितस्य जघन्येनान्तर्मुहूर्त्तेन कस्यापि श्रेणिसमारम्भात्, उत्कर्षतोऽनन्तं कालं, अनन्ता उत्सर्पिण्यवसर्पिण्यः कालतः क्षेत्रतोऽपार्द्धं पुद्गलपरावर्त्तं देशोनं, तावतः कालादूर्ध्वं पूर्वप्रतिपन्नोपशमश्रेणिकस्य पुनः श्रेणिसमारम्भात्। अल्पबहुत्वचिन्तायां सर्वस्तोकाः पुरुषवेदकाः गतित्रयेऽप्यल्पत्वात्, स्त्रीवेदकाः संख्येयगुणाः, तिर्यग्गतौ त्रिगुणत्वात् (मनुष्यगतौ सप्तविंशतिगुणत्वात्) देवगतौ द्वात्रिंशद्गुणत्वात्, अवेदका अनन्तगुणाः, सिद्धानामनन्तत्वात्, नपुंसकवेदका अनन्तगुणाः, वनस्पतीनां सिद्धेभ्योऽप्यनन्तगुणत्वात् ॥

अहवा चउव्विहा सव्वजीवा पण्णत्ता, तंजहा—चक्खुदंसणी अचक्खुदंसणी अवधिदंसणी केवलिदंसणी ॥ चक्खुदंसणी णं भंते!०?, जह० अंतो० उक्को० सागरोवमसहस्सं सातिरेगं, अचक्खुदंसणी दुविहे पण्णत्ते—अणातीए वा अपज्जवसिए अणाईए वा सपज्जवसिए। ओहिदंसणिस्स जह० इक्कं समयं उक्को० दो छावट्ठी सागरोवमाणं साइरेगाओ, केवलदंसणी साइए अपज्जवसिए ॥ चक्खुदंसणिस्स अंतरं जह० अंतोमु० उक्को० वणस्सतिकालो। अचक्खुदंसणिस्स दुविहस्स नत्थि अंतरं। ओहिदंसणस्स जह० अंतोमु० उक्कोसे० वणस्सइकालो। केवलदं-

**सणिस्स णत्थि अंतरं । अप्पाबहुयं सव्वत्थोवा ओहिदंसणी चक्खुदंसणी असंखेज्जगुणा केवलदंसणी अणंतगुणा अचक्खुदंसणी अणंतगुणा ॥ ( सू० २५९ ]**

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण चतुर्विधाः सर्वजीवाः प्रज्ञप्तास्तद्यथा—चक्षुर्दर्शनिनोऽचक्षुर्दर्शनिनोऽवधिदर्शनिनः केवलदर्शनिनः ॥ अमीषां कायस्थितिमाह—'**चक्खुदंसणी णं भंते!**' इत्यादि, चक्षुर्दर्शनी जघन्यतोऽन्तर्मुहूर्त्तं, अचक्षुर्दर्शनिभ्य उद्धृत्य चक्षुर्दर्शनिषूत्पद्य तावन्तं कालं स्थित्वा पुनरचक्षुर्दर्शनिषु कस्यापि गमनात्, उत्कर्षतः सागरोपमसहस्रं सातिरेकं, अचक्षुर्दर्शनी द्विविधः प्रज्ञप्तस्तद्यथा—अनाद्यपर्यवसितो यो न जातुचिदपि सिद्धिं गन्ता, अनादिसपर्यवसितो भव्यविशेषो यः सेत्स्यति, अवधिदर्शनी जघन्यत एकं समयं, अवधिप्रतिपत्त्यनन्तरमेव कस्यापि मरणतो मिथ्यात्वगमनतो दुष्टाध्यवसायभावतोऽवधिप्रतिपातात्, उत्कर्षतो द्वे षट्षष्टी सागरोपमाणां सातिरेके, तत्रैका षट्षष्टिः एवं—विभङ्गज्ञानी तिर्यक्पञ्चेन्द्रियो मनुष्यो वाऽधः सप्तम्यामुत्पन्नः, तत्र त्रयस्त्रिंशतं सागरोपमाणि स्थित्वा तत्र च प्रत्यासन्ने उद्वर्त्तनाकाले सम्यक्त्वं प्राप्य पुनः परित्यजति ततोऽप्रतिपतितेनैव विभङ्गेन पूर्वकोट्यायुष्केषु तिर्यक्षु जातस्ततः पुनरप्यप्रतिपतितविभङ्ग एवाधः सप्तम्यामुत्पन्न., तत्र च त्रयस्त्रिंशतं सागरोपमाणि स्थित्वा पुनरप्युद्वर्त्तनाकाले प्रत्यासन्ने सम्यक्त्वं प्राप्य पुनः परित्यजति, ततः पुनरप्यप्रतिपतितेनैव विभङ्गेन पूर्वकोट्यायुष्केषु तिर्यक्षूपजातो, वेलाद्वयमपि चाविग्रहेणाधः सप्तम्यास्तिर्यक्षूत्पादयितव्यः, विग्रहे विभङ्गस्य प्रतिषेधात्, उक्तं च—"विभंगनाणी पंचेदियतिरिक्खजोणिया मणूया य आहारगा नो अणाहारगा" इति, नन्वपान्तराले किमर्थं सम्यक्त्वं प्रतिपाद्यते?, उच्यते, विभङ्गस्य स्तोककालावस्थायित्वात्, उक्तञ्च—"विभंगनाणी जह० एगं समयं उक्को० तेत्तीसं सागरोवमाइं देसूणाए पुव्वकोडीए अब्भहियाइं"ति, तदनन्तरमप्रतिपतितविभङ्ग एव मनु-

ष्यत्वं प्राप्य सम्यक्त्वपूर्वं संयममासाद्य विजयादिषु वारद्वयमुत्पद्यमानस्य द्वितीया षट्षष्टिर्भावनीया, अवधिदर्शनं च विभङ्गेऽवधिज्ञाने च तुल्यमतो द्वे षट्षष्टी सागरोपमाणां सातिरेके स्थितिरवधिदर्शनिनः, केवलदर्शनी साद्यपर्यवसितः ॥ साम्प्रतमन्तरमाह— 'चक्खुदंसणिस्स णं भंते!' इत्यादि, चक्षुर्दर्शनिनोऽन्तरं जघन्येनान्तर्मुहूर्त्तं तावत्प्रमाणेनाचक्षुर्दर्शनभवेन व्यवधानात्, उत्कर्षतो वनस्पतिकालः, स च प्रागुक्तस्वरूपः, अचक्षुर्दर्शनिनोऽनाद्यपर्यवसितस्य नास्त्यन्तरमपर्यवसितत्वात्, अनादिसपर्यवसितस्य नास्त्यन्तरं अचक्षुर्दर्शनित्वापगमे भूयोऽचक्षुर्दर्शनित्वायोगात्, क्षीणघातिकर्म्मणः प्रतिपातासम्भवात्, अवधिदर्शनिनो जघन्येनैकं समयमन्तरं, प्रतिपातसमयानन्तरसमय एव कस्यापि पुनस्तल्लाभभावात्, क्वचिदन्तर्मुहूर्त्तमिति पाठ., स च सुगमः तावता व्यवधानेन पुनस्तल्लाभभावात्, न चायं निर्मूलः पाठो, मूलटीकाकारेणापि मतान्तरेण समर्थितत्वात्, उत्कर्षतो वनस्पतिकालः, तावतः कालादूर्द्ध्वमवश्यमवधिदर्शनसम्भवात् अनादिमिथ्यादृष्टेरप्यविरोधात्, ज्ञानं हि सम्यक्त्वसचिवं न दर्शनमपीति भावना, केवलदर्शनिनः साद्यपर्यवसितस्य नास्त्यन्तरमपर्यवसितत्वात् । अल्पबहुत्वचिन्तायां सर्वस्तोका अवधिदर्शनिनो, देवनारककतिपयगर्भजतिर्यक्पञ्चेन्द्रियमनुष्याणामेव तद्भावात्, चक्षुर्दर्शनिनोऽसङ्ख्येयगुणाः, संमूर्च्छिमतिर्यक्पञ्चेन्द्रियचतुरिन्द्रियाणामपि तस्य भावात्, केवलदर्शनिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्योऽचक्षुर्दर्शनिनोऽनन्तगुणाः, एकेन्द्रियाणामप्यचक्षुर्दर्शनित्वात् ॥

**अहवा चउव्विहा सव्वजीवा पण्णत्ता, तंजहा—संजया असंजया संजयासंजया नोसंजयानोअसंजयानोसंजयासंजया । संजए णं भंते!०? जह० एक्कं समयं उक्को० देसूणा पुव्वकोडी, असंजया जहा अण्णाणी, संजयासंजते जह० अंतोमु० उक्को० देसूणा पुव्वकोडी, नोसंजतनो-**

**असंजयनोसंजयासंजए सातीए अपज्जवसिए, संजयस्स संजयासंजयस्स दोण्हवि अंतरं जह० अंतोमु० उक्को० अवड्ढं पोग्गलपरियट्टं देसूणं, असंजयस्स आदिदुवे णत्थि अंतरं, सातीयस्स सपज्जवसियस्स जह० एक्कं स० उक्को० देसूणा पुव्वकोडी, चउत्थगस्स णत्थि अंतरं ॥ अप्पाबहु० सव्वत्थोवा संजयासंजया संजया असंखेज्जगुणा णोसंजयणोअसंजयणोसंजयासंजया अणंतगुणा असंजया अणंतगुणा ॥ सेत्तं चउव्विहा सव्वजीवा पण्णत्ता ( सू० २६० )**

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण सर्वजीवाश्चतुर्विधाः प्रज्ञप्तास्तद्यथा—संयताः असंयताः संयतासंयताः नोसंयतानोअसंयतानो संयतासंयताः ॥ कायस्थितिमाह—'संजए णं भंते !' इत्यादि, संयतो जघन्यत एकं समयं, सर्वविरतिपरिणामसमयानन्तरसमय एव कस्यापि मरणात्, उत्कर्षतो देशोना पूर्वकोटी, असंयतस्त्रिविधः—अनाद्यपर्यवसितः अनादिसपर्यवसितः सादिसपर्यवसितश्च, तत्रानाद्यपर्यवसितो यो न जातुचिदपि संयमं प्राप्स्यति, अनादिसपर्यवसितो य. संयमं लप्स्यति, लब्धेन च तेनैव संयमेन सिद्धिं गन्ता, सादिसपर्यवसितो सर्वविरतेर्देशविरतेर्वा परिभ्रष्टः, स हि सादिः नियमभाविसपर्यवसितत्वापेक्षया च सपर्यवसितः, स च जघन्येनान्तर्मुहूर्त्तं, तावता कालेन कस्यापि संयतत्वलाभात् 'तिण्हं सहस्स पुहुत्त'मित्यादि वचनात्, उत्कर्षतोऽनन्तं कालं, अनन्ता उत्सर्पिण्यवसर्पिण्यः कालतः, क्षेत्रतोऽपार्द्धं पुद्गलपरावर्त्तं देशोनं, संयतासंयतो जघन्येनान्तर्मुहूर्त्तं, संयतासंयतत्वप्रतिपत्तेः भङ्गबहुलतया जघन्यतोऽप्येतावन्मात्रकालप्रमाणत्वात्, उत्कर्षतो देशोना पूर्वकोटी, बालकाले तदभावात्, त्रितयप्रतिषेधवर्त्ती सिद्धः, स च साद्यपर्यवसित एव । अन्तरमाह—'संजयस्स णं'मित्यादि, संयतस्य जघन्येनान्तरमन्तर्मुहूर्त्तं, तावता कालेन पुनः कस्यापि सं-

यतत्वलाभात्, उत्कर्षतोऽनन्तं कालं, अनन्ता उत्सर्पिण्यवसर्पिण्य· कालतः क्षेत्रतोऽपार्द्धं पुद्गलपरावर्त्तं देशोनम्, एतावतः कालादूर्द्ध्वं पूर्वमवाप्तसंयमस्य नियमतः संयमलाभात्, अनाद्यपर्यवसितस्यासंयतस्य नास्त्यन्तरमपर्यवसितत्वात्, अनादिसपर्यवसितस्यापि नास्त्यन्तरं, तस्य प्रतिपातासम्भवात्, सादिसपर्यवसितस्य जघन्यत एकं समयं, स चैकसमयः प्राग्व्यावर्णितः संयतसमयः, एवमुत्कर्षतो देशोना पूर्वकोटी, असंयतलव्यवधायकस्य संयतकालस्य संयतासंयतकालस्य वा उत्कर्षतोऽप्येतावत्प्रमाणत्वात्, संयतासंयतस्य जघन्यतोऽन्तर्मुहूर्त्तं, तद्भावपाते एतावता कालेन तल्लाभसिद्धेः, उत्कर्षतः संयतवत्, त्रितयप्रतिषेधवर्त्तिनः सिद्धस्य साद्यपर्यवसितस्य नास्त्यन्तरं अपर्यवसिततया सदा तद्भावापरित्यागात् ॥ अल्पबहुत्वमाह—'एएसि ण'मित्यादि, सर्वस्तोका जीवा. संयताः, सङ्ख्येयकोटीकोटीप्रमाणत्वात्, संयतासंयता असङ्ख्येयगुणाः, असङ्ख्येयानां तिरश्चां देशविरतिभावात्, त्रितयप्रतिषेधवर्त्तिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्योऽसंयता अनन्तगुणाः वनस्पतीनां सिद्धेभ्योऽप्यनन्तत्वात् । उपसंहारमाह—'सेत्त'मित्यादि ॥ उक्ताश्चतुर्विधाः सर्वजीवाः, सम्प्रति पञ्चविधानाह—

तत्थ जे ते एवमाहंसु पंचविधा सव्वजीवा पण्णत्ता ते एवमाहंसु, तंजहा—कोहकसायी माणकसायी मायाकसायी लोभकसायी अकसायी ॥ कोहकसाई माणकसाई मायाकसाई णं जह० अंतो० उक्को० अंतोमु०, लोभकसाइस्स जह० एकं स० उक्को० अंतो०, अकसाई दुविहे जहा हेट्ठा ॥ कोहकसाई माणकसाईमायाकसाईणं अंतरं जह० एक्कं० स० उक्को० अंतो० लोहकसाइस्स अंतरं जह० अंतो० उक्को० अंतो०, अकसाई तहा जहा हेट्ठा ॥ अप्पाबहु—अकसाइणो

२ प्रतिपत्तौ सर्वजीव चातुर्विध्ये चक्षुर्दर्शनादि उद्देशः २ सू० २११

**सव्वत्थोवा माणकसाई तहा अणंतगुणा। कोहे माया लोभे विसेसमहिया मुणेतव्वा ॥ १ ॥**
**( सू० २४१ )**

'तत्थ जे ते' इत्यादि, तत्र ये ते एवमुक्तवन्तः पञ्चविधाः सर्वजीवाः प्रज्ञप्तास्ते एवमुक्तवन्तस्तद्यथा—क्रोधकषायिणो मानकषायिणो मायाकषायिणो लोभकषायिणोऽकषायिणश्च ॥ अमीषां कायस्थितिमाह—'कोहकसाई णं भंते' इत्यादि, क्रोधकषायी जघन्येनाप्यन्तर्मुहूर्त्तं, "क्रोधाद्युपयोगकालोऽन्तर्मुहूर्त्त"मिति वचनात्, एवं मानकषायी मायाकषायी च वक्तव्यः, लोभकषायी जघन्येनैकं समयं, स चोपशमश्रेणेः प्रतिपतन् लोभकषायोदयप्रथमसमयानन्तरं मृतः प्रतिपत्तव्यो, मरणसमये कस्यापि क्रोधाद्युदयसम्भवात्, क्रमेण प्रतिपतनं हि मरणाभावे न तु मरणेऽपीति, उत्कर्षतोऽन्तर्मुहूर्त्तं, अकषायी द्विविधः—साद्यपर्यवसितः केवली, सादिसपर्यवसित उपशान्तकषायः, स च जघन्येनैकं समयं द्वितीये समये मरणतः क्रोधाद्युदयेन सकषायत्वप्राप्तेः, उत्कर्षतोऽन्तर्मुहूर्त्तमुपशान्तमोहगुणस्थानककालस्यैतावत्प्रमाणत्वादित्येके, अन्ये त्वभिदधति—जघन्यतोऽप्यन्तर्मुहूर्त्तं, न लोभोपशमप्रवृत्तस्यान्तेऽन्तर्मुहूर्त्तादधो मरणमिति वृद्धवादात्, उत्कर्षतोऽप्यन्तर्मुहूर्त्तमुपशान्तमोहगुणस्थानककालस्योत्कर्षतोऽप्येतावन्मात्रत्वात्, नवरं जघन्यपदादुत्कृष्टपदं विशेषाधिकमवसातव्यं, युक्तं चैतत् सूत्रकृतोऽभिप्रायेण प्रतिभासते, लोभकषायिणो जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तान्तराभिधानात्, वक्ष्यति च—"लोभकसाइयस्स जह० अंतो० उक्कोसेणवि अंतोमुहुत्तमंतर"मिति ॥ साम्प्रतमन्तरमाह—'कोहकसाइस्स णं भंते!' इत्यादि, क्रोधकषायिणोऽन्तरं जघन्येनैकं समयं, तदुपशमसमयानन्तरं मरणे भूयः कस्यापि तदुदयात्, उत्कर्षतोऽन्तर्मुहूर्त्तं, एवं मानकषायिमायाकषायिसूत्रे अपि वक्तव्ये, लोभकषायिणो जघन्येनोत्कृष्टेनाप्यन्तर्मुहूर्त्तं नवरमुत्कृष्टं बृहत्तरमवसातव्यम्, अकषा-

यिणः साद्यपर्यवसितस्य नास्त्यन्तरं अपर्यवसितत्वात्, सादिसपर्यवसितस्य जघन्येनान्तर्मुहूर्त्तं, तावता कालेन भूयः श्रेणिलाभात्, उत्कर्षतोऽनन्तं कालं, अनन्ता उत्सर्पिण्यवसर्पिण्यः कालतः, क्षेत्रतोऽपार्द्धं पुद्गलपरावर्त्तं देशोनं, पूर्वमनुभूताकषायित्वस्यैतावता कालेन भूयो नियमेनाकषायित्वभावात् ॥ अल्पबहुत्वचिन्तायां सर्वस्तोका अकषायिणः, सिद्धानामेवाकषायित्वात्, तेभ्यो मानकषायिणोऽनन्तगुणाः, निगोदजीवानां सिद्धेभ्योऽप्यनन्तगुणत्वात्, तेभ्यः क्रोधकषायिणो विशेषाधिकाः, क्रोधकषायोदयस्य चिरकालावस्थायित्वात्, एवं तेभ्यो मायाकषायिणो विशेषाधिकाः, तेभ्यो लोभकषायिणो विशेषाधिकाः, मायालोभोदययोश्चिरतरकालावस्थायित्वात् ॥

**अहवा पंचविहा सव्वजीवा पण्णत्ता, तंजहा—णेरइया तिरिक्खजोणिया मणुस्सा देवा सिद्धा। संचिट्ठणांतराणि जह हेट्ठा भणियाणि। अप्पाबहु० थोवा मणुस्सा णेरइया असंखेज्जगुणा देवा असंखेज्जगुणा सिद्धा अणंतगुणा तिरिया अणंतगुणा। सेत्तं पंचविहा सव्वजीवा पण्णत्ता॥ (सू० २६२)**

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण पञ्चविधाः सर्वजीवाः प्रज्ञप्तास्तद्यथा—नैरयिकास्तिर्यञ्चो मनुष्या देवाः सिद्धाः, अमीषां कायस्थितिरन्तरमल्पबहुत्वं च प्रागेवाभिहितमिति न भूयो भाव्यते। उपसंहारमाह—'सेत्तं पंचविहा सव्वजीवा पन्नत्ता' ॥ तदेवमुक्ताः पञ्चविधाः सर्वजीवाः, सम्प्रति षड्विधानाह—

अंतोमुहुत्तं उक्कोसेणं पुव्वकोडी उव्वट्टित्ता नेरइएसु जाव पंचमं पुढविं ताव गच्छंति, तिरिक्खमणुस्सेसु सव्वेसु, देवेसु जाव सहस्सारा, सेसं जहा जलयराणं जाव चउगतिया चउआगइया परित्ता असंखेज्जा से तं उरपरिसप्पा। से किं तं भुयगपरिसप्पा?, २ भेदो तहेव, चत्तारि सरीरगा ओगाहणा जहन्नेणं अंगुलासंखे० उक्कोसेणं गाउयपुहुत्तं ठिती जहन्नेणं अंतोमुहुत्तं उक्कोसेणं पुव्वकोडी, सेसेसु ठाणेसु जहा उरपरिसप्पा, णवरं दोच्चं पुढविं गच्छंति, से तं भुयपरिसप्पा पण्णत्ता, से तं थलयरा ॥ ( सू० ३९ )। से किं तं खहयरा?, २ चउव्विहा पण्णत्ता, तंजहा—चम्मपक्खी तहेव भेदो, ओगाहणा जहन्नेणं अंगुलस्स असंखे० उक्कोसेणं धणुपुहुत्तं, ठिती जहन्नेणं अंतोमुहुत्तं उक्कोसेणं पलिओवमस्स असंखेज्जतिभागो, सेसं जहा जलयराणं, नवरं जाव तच्चं पुढविं गच्छंति जाव से तं खहयरगब्भवक्कंतियपंचेंदियतिरिक्खजोणिया, से तं तिरिक्खजोणिया ॥ ( सू० ४० )

स्थलचरगर्भव्युत्क्रान्तिकानां भेदोपदर्शकं सूत्रं यथा संमूर्च्छिमस्थलचराणां, नवरमत्रासालिका न वक्तव्या, सा हि संमूर्च्छिमैव न गर्भव्युत्क्रान्तिका, तथा महोरगसूत्रे "जोयणसयंपि जोयणसयपुहुत्तियावि जोयणसहस्संपि" इत्येतदधिकं वक्तव्यं, शरीरादिद्वारकदम्बकसूत्रं तु सर्वत्रापि गर्भव्युत्क्रान्तिकजलचराणामिव, नवरमवगाहनास्थित्युद्वर्त्तनासु नानात्वं, तत्र चतुष्पदानामुत्कृष्टाऽवगाहना षड् गव्यूतानि, स्थितिरुत्कर्षतस्त्रीणि पल्योपमानि, उद्वर्त्तना चतुर्थपृथिव्या आरभ्य यावत्सहस्रारः, एतेषु सर्वेष्वपि जीवस्थानेष्वनन्तरमुद्वृत्त्योत्पद्यन्ते, उरःपरिसर्पाणामुत्कृष्टावगाहना योजनसहस्रं, स्थितिरुत्कर्षतः पूर्वकोटी, उद्वर्त्तना पञ्चमपृथिव्या आरभ्य यावत्सह-

तत्थ जे ते एवमाहंसु छव्विहा सव्वजीवा पण्णत्ता ते एवमाहंसु, तंजहा—आभिणिबोहियणाणी सुयणाणी ओहिनाणी मणपज्जवणाणी केवलनाणी अण्णाणी, आभिणिबोहियणाणी णं भंते? आभिणिबोहियणाणित्ति कालओ केवचिरं होइ?, गोयमा! जह० अन्तोमुहुत्तं उक्को० छावट्ठिं सागरोवमाइं साइरेगाइं एवं सुयणाणीवि, ओहिणाणी णं भंते!० ?, जह० एक्कं समयं उक्को० छावट्ठिं सागरोवमाइं साइरेगाइं, मणपज्जवणाणी णं भंते!० ?, जह० एक्कं समयं उक्को० देसूणा पुव्वकोडी, केवलनाणी णं भंते!० ? सादीए अपज्जवसिए, अन्नाणिणो तिविहा पं० तं०—अणाइए वा अपज्जवसिए अणाइए वा सपज्जवसिए साइए वा सपज्जवसिए, तत्थ साइए सपज्जवसिए जह० अंतो० उक्को० अणंतं कालं अवड्ढं पुग्गलपरियट्टं देसूणं। अंतरं आभिणिबोहियणाणिस्स जह० अंतो० उक्को० अणंतं कालं अवड्ढं पुग्गलपरियट्टं देसूणं, एवं सुय० अंतरं० मणपज्जव०, केवलनाणिणो णत्थि अंतरं, अन्नाणि० साइसपज्जवसियस्स जह० अंतो० उक्को० छावट्ठिं सागरोवमाइं साइरेगाइं। अप्पा० सव्वत्थोवा मण० ओहि० असंखे० आभि० सुय० विसेसा० सट्ठाणे दोवि तुल्ला केव० अणंत० अण्णाणी अणंतगुणा॥ अहवा छव्विहा सव्वजीवा पण्णत्ता तंजहा—(एवंविधः पाठ इतः प्राग् आवश्यको न चोपलब्धो दृश्यमानादर्शेषु क्वचिदपि) एगिंदिया बेंदिया तेंदिया चउरिंदिया पंचेंदिया अणिंदिया। संचिट्ठणांतरा जहा हेट्ठा। अप्पाबहु—

**सव्वत्थोवा पंचेंदिया चउरिंदिया विसेसा० तेइंदिया विसेसा० बेंदिया विसेसा० एगिंदिया अणंतगुणा अणिंदिया अणंतगुणा ॥ ( सू० २६३ )**

'तत्थे'त्यादि, तत्र ये ते एवमुक्तवन्तः षड्विधाः सर्वजीवाः प्रज्ञप्तास्ते एवमुक्तवन्तस्तद्यथा—आभिनिबोधिकज्ञानिनः श्रुतज्ञानिनोऽवधिज्ञानिनो मनःपर्यवज्ञानिनः केवलज्ञानिनोऽज्ञानिनश्च । सम्प्रत्यमीषां कायस्थितिमाह—'आभिणिबोहियनाणी णं भंते !' इत्यादि, आभिनिबोधिकज्ञानी जघन्येनान्तर्मुहूर्त्तं, सम्यक्त्वकालस्य जघन्यत एतावन्मात्रत्वात्, उत्कर्षतः षट्षष्टिः सागरोपमाणि सातिरेकाणि, तानि च विजयादिषु वारद्वयादिगमनेन भावनीयानि, एवं श्रुतज्ञानिनोऽपि वक्तव्यं, आभिनिबोधिकश्रुतज्ञानयोः परस्पराविनाभूतत्वात्, 'जत्थ आभिणिबोहियणाणं तत्थ सुयनाणं, जत्थ सुयनाणं तत्थ आभिणिबोहियनाणं, दोवि एयाइं अण्णोण्णमणुगयाइं' इति वचनात्, अवधिज्ञानी जघन्यत एकं समयं, सा चैकसमयता मरणतः प्रतिपातेन मिथ्यात्वगमनतो वा विभङ्गज्ञानभावतः प्रतिपत्तव्या, उत्कर्षतः षट्षष्टिः सागरोपमाणि सातिरेकाणि, तान्याभिनिबोधिकज्ञानवद्भावनीयानि, मनःपर्यवज्ञानी जघन्यत एकं समयं, द्वितीय समये मरणतः प्रतिपातात्, उत्कर्षतो देशोना पूर्वकोटी, चारित्रकालस्योत्कर्षतोऽप्येतावन्मात्रत्वात्, केवलज्ञानी साद्यपर्यवसितः । अज्ञानी त्रिविधः प्रज्ञप्तस्तद्यथा—अनाद्यपर्यवसितः अनादिसपर्यवसितः सादिसपर्यवसितश्च, तत्र योऽसौ सादिसपर्यवसितोऽसौ जघन्येनान्तर्मुहूर्त्तं, तत ऊर्द्ध्वं कस्यापि सम्यक्त्वलाभतो भूयोऽपि ज्ञानित्वभावात्, उत्कर्षतोऽनन्तं कालं यावदपार्द्धं देशोनं पुद्गलपरावर्त्तं, ज्ञानित्वात्परिभ्रष्टस्यैतावता कालेन नियमतो भूयोऽपि ज्ञानित्वभावात् । अन्तरचिन्तायामाभिनिबोधिकज्ञानिनो जघन्येनान्तरमन्तर्मुहूर्त्तं, कस्याप्येतावत्कालेन भूयोऽप्याभिनिबोधिकज्ञानित्वभावात्, उत्कर्षतोऽनन्तं कालं यावदपार्द्धं पुद्गल-

परावर्त्तं देशोनं, एवं श्रुतज्ञानिनोऽवधिज्ञानिनो मनःपर्यवज्ञानिनश्चान्तरं वक्तव्यं, केवलज्ञानिनः साद्यपर्यवसितत्वान्नास्त्यन्तरं, अज्ञानिनोऽनाद्यपर्यवसितस्य नास्त्यन्तरं अपर्यवसितत्वात्, अनादिसपर्यवसितस्यापि नास्त्यन्तरं भूयस्तद्भावायोगात्, पुनरज्ञानित्वं हि भवत् सादिसपर्यवसितं भवति न त्वनादिसपर्यवसितं, सादिसपर्यवसितस्य जघन्यतोऽन्तर्मुहूर्त्तं, तावता कालेन भूयोऽपि कस्याप्यज्ञानित्वप्राप्तेः, उत्कर्षतः षट्षष्टिः सागरोपमाणि सातिरेकाणि। अल्पबहुत्वचिन्तायां सर्वस्तोका मनःपर्यवज्ञानिनश्चारित्रिणामेव केषाञ्चित्तद्भावात् 'त संजयस्स सव्वप्पमायरहियस्स विविधरिद्धिमतो' इति वचनात्, तेभ्योऽवधिज्ञानिनोऽसङ्ख्यातगुणाः, देवनारकाणामप्यवधिज्ञानभावात्, तेभ्य आभिनिवोधिकज्ञानिनः श्रुतज्ञानिनश्च द्वयेऽपि विशेषाधिकाः, स्वस्थाने तु द्वयेऽपि परस्परं तुल्याः, आभिनिवोधिकश्रुतज्ञानयोः परस्पराविनाभावात्, तेभ्यः केवलज्ञानिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्योऽज्ञानिनोऽनन्तगुणाः, वनस्पतिकायानां सिद्धेभ्योऽप्यनन्तत्वात् ॥ 'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण षड्विधाः सर्वजीवाः प्रज्ञप्तास्तद्यथा—एकेन्द्रिया द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रिया. पञ्चेन्द्रिया अनिन्द्रियाः। एतेषा कायस्थितिरन्तरमल्पबहुत्वं प्रागेव भावितम् ॥

**अहवा छव्विहा सव्वजीवा पण्णत्ता तंजहा—ओरालियसरीरी वेउव्वियसरीरी आहारगसरीरी तेयगसरीरी कम्मगसरीरी असरीरी ॥ ओरालियसरीरी णं भंते! कालओ केवचिरं होइ?, जहण्णेणं खुड्डागं भवगहणं दुसमऊणं, उक्कोसेणं असंखिज्जं कालं जाव अंगुलस्स असंखेज्जतिभागं, वेउव्वियसरीरी जह० एक्कं समयं उक्कोसेणं तेत्तीसं सागरोवमाइं अंतोमुहुत्तमब्भहियाइं, आहारगसरीरी जह० अंतो० उक्को० अंतो०, तेयगसरीरी दुविहे—अणादीए वा अपज्जवसिए अणादीए**

वा सपज्जवसिते, एवं कम्मगसरीरीवि, असरीरी सातीए अपज्जवसिते ॥ अंतरं ओरालियसरीरस्स जह० एक्कं समयं उक्को० तेत्तीसं सागरोवमाइं अंतोमुहुत्तमब्भहियाइं, वेउव्वियसरीरस्स जह० अंतो० उक्को० अणंतं कालं वणस्सतिकालो, आहारगस्स सरीरस्स जह० अंतो० उक्को० अणंतं कालं जाव अवड्ढं पोग्गलपरियट्टं देसूणं, तेय० कम्मसरीरस्स य दुण्हवि णत्थि अंतरं ॥ अप्पाबहु० सव्वत्थोवा आहारगसरीरी वेउव्वियसरीरी असंखेज्जगुणा ओरालियसरीरी असंखेज्जगुणा असरीरी अणंतगुणा तेयाकम्मसरीरी दोवि तुल्ला अणंतगुणा ॥ सेत्तं छव्विहा सव्वजीवा पण्णत्ता ॥ ( सू० २६४ )

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण षड्विधाः सर्वजीवा. प्रज्ञप्तास्तद्यथा—औदारिकशरीरिणः वैक्रियशरीरिणः आहारकशरीरिणः तैजसशरीरिण. कार्मणशरीरिणः अशरीरिणश्च ॥ अमीषा कायस्थितिमाह—'ओरालियसरीरी णं भंते' इत्यादि, औदारिकशरीरी जघन्यतः क्षुल्लकभवग्रहणं द्विसमयोनं, विग्रहे आद्ययोर्द्वयोः समययो. कार्मणशरीरित्वात्, उत्कर्षतोऽसङ्ख्येयं कालं तावन्तं कालमविग्रहेणोत्पादसम्भवात् । वैक्रियशरीरी जघन्येनैकं समयं, विकुर्वणासमयानन्तरसमये एव कस्यापि मरणसम्भवात्, उत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणि अन्तर्मुहूर्त्ताभ्यधिकानि, तानि चैवं—कश्चिच्चारित्रवान् वैक्रियशरीरं कृत्वाऽन्तर्मुहूर्त्तं जीवित्वा स्थितिक्षयादविग्रहेणानुत्तरसुरेषूपजायते, आहारकशरीरी जघन्येनाप्यन्तर्मुहूर्त्तमुत्कर्षतोऽप्यन्तर्मुहूर्त्तं, तैजसशरीरी कार्मणशरीरी च प्रत्येक द्विविध.—अनाद्यपर्यवसितो यो न मुक्तिं गन्ता, अनादिसपर्यवसितो मुक्तिगामी, अशरीरी साद्यपर्यवसित. । अन्तरचिन्तायामौदारिकशरीरिणोऽ-

न्तरं जघन्यत एकः समयः, स च द्विसामयिक्यामपान्तरालगतौ भावनीयः, प्रथमे समये कार्मणशरीरोपेतत्वात्, उत्कर्षतस्त्रय-
स्त्रिंशत्सागरोपमाणि अन्तर्मुहूर्त्ताभ्यधिकानि, उत्कृष्टो वैक्रियकाल इति भावः, वैक्रियशरीरिणोऽन्तरं जघन्यतोऽन्तर्मुहूर्त्तं, सकृद्वैक्रिय-
करणे एतावता कालेन पुनर्वैक्रियकरणात् मानवदेवेषु भावात्, उत्कर्षतो वनस्पतिकालः प्रकट एव, आहारकशरीरिणो जघन्येनान्त-
र्मुहूर्त्तं, सकृत्करणे एतावता कालेन पुनः करणात्, उत्कर्षतोऽनन्तं कालं यावदपार्द्धं पुद्गलपरावर्त्तं, तैजसकार्म्मणशरीरयोर्द्विधाऽपि
नास्त्यन्तरं । अल्पबहुत्वचिन्तायां सर्वस्तोका आहारकशरीरिणः, उत्कर्षतोऽपि सहस्रपृथक्त्वेन प्राप्यमाणत्वात्, तेभ्यो वैक्रियशरीरि-
णोऽसङ्ख्येयगुणाः, देवनारकाणां कतिपयगर्भजतिर्यक्पञ्चेन्द्रियमनुष्यवायुकायिकानां च वैक्रियशरीरित्वात्, तेभ्य औदारिकशरीरिणो-
ऽसङ्ख्येयगुणाः, इहानन्तानामपि जीवाना यस्मादेकमौदारिकं शरीरं ततः स एक औदारिकशरीरी परिगृह्यते ततोऽसङ्ख्येयगुणा एवौ-
दारिकशरीरिणो नानन्तगुणाः, आह च **मूलटीकाकारः**—"औदारिकशरीरिभ्योऽशरीरा अनन्तगुणाः, सिद्धानामनन्तत्वात्, औ-
दारिकशरीरिणां च शरीरापेक्षयाऽसङ्ख्येयत्वा"दिति, तेभ्योऽशरीरिणोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्यस्तैजसशरीरिणः कार्म-
णशरीरिणश्चानन्तगुणाः, स्वस्थाने तु द्वयेऽपि परस्पर तुल्याः, तैजसकार्मणयोः परस्पराविनाभावात्, इह तैजसशरीरं कार्मणशरीरं
च निगोदेष्वपि प्रतिजीवं विद्यत इति सिद्धेभ्योऽप्यनन्तगुणत्वम् । उपसंहारमाह—**'सेत्तं छव्विहा सव्वजीवा पन्नत्ता'** ॥ उक्ताः
षड्विधाः सर्वजीवाः, सम्प्रति सप्तविधानाह—

**तत्थ जे ते एवमाहंसु सत्तविधा सव्वजीवा पं० ते एवमाहंसु, तंजहा—पुढविकाइया आउका-
इया तेउकाइया वाउकाइया वणस्सतिकाइया तसकाइया अकाइया । संचिट्ठणंतरा जहा हेट्ठा ।**

अप्पाबहु० सव्वत्थोवा तसकाइया तेउकाइया असंखेज्जगुणा पुढविकाइया विसे० आउ० विसे० वाउ० विसेसा० सिद्धा अणंतगुणा वणस्सइकाइया अणंतगुणा ॥ (सू० २६५)

'तत्थ जे ते' इत्यादि, तत्र ये ते एवमुक्तवन्तः सप्तविधाः सर्वजीवाः प्रज्ञप्तास्ते एवमुक्तवन्तस्तद्यथा—पृथिवीकायिका अप्कायिकाः तेजस्कायिका वायुकायिका वनस्पतिकायिकाः त्रसकायिकाः अकायिकाश्च । पृथिवीकायिकादीनां कायस्थितिरन्तरमल्पबहुत्वं च प्रागेव भावितमिति न भूयो भाव्यते ॥

अहवा सत्तविहा सव्वजीवा पण्णत्ता, तंजहा—कण्हलेस्सा नीललेस्सा काउलेस्सा तेउलेस्सा पम्हलेस्सा सुक्कलेस्सा अलेस्सा॥ कण्हलेसे णं भंते! कण्हलेसत्ति कालओ केवचिरं होइ, गोयमा! ज० अंतो० उक्को० तेत्तीसं सागरोवमाइं अंतोमुहुत्तमब्भहियाइं, णीललेस्से णं जह० अंतो० उक्क० दस सागरोवमाइं पलिओवमस्स असंखेज्जतिभागअब्भहियाइं, काउलेस्से णं भंते!०, जह० अंतो० उक्क० तिन्नि सागरोवमाइं पलिओवमस्स असंखेज्जतिभागमब्भहियाइं, तेउलेस्से णं भंते!, जह० अं० उक्क० दोण्णि सागरोवमाइं पलिओवमस्स असंखेज्जइभागमब्भहियाइं, पम्हलेसे णं भंते!, जह० अंतो० उक्क० दस सागरोवमाइं अंतोमुहुत्तमब्भहियाइं, सुक्कलेसे णं भंते!०?, जहन्नेणं अंतो० उक्कोसेणं तित्तीसं सागरोवमाइं अंतोमुहुत्तमब्भहियाइं, अलेस्से णं भंते! सादीए अपज्जवसिते ॥ कण्हलेसस्स णं भंते! अंतरं कालओ केवचिरं होति?, जह० अंतो० उक्को० ते-

त्तीसं सागरोवमाइं अंतोमुहुत्तम०, एवं नीललेसस्सवि, काउलेसस्सवि, तेउलेसस्स णं भंते! अंतरं का०?, जह० अंतो० उक्को० वणस्सतिकालो, एवं पम्हलेसस्सवि सुक्कलेसस्सवि दोण्हवि एवमंतरं, अलेसस्स णं भंते! अंतरं कालओ०?, गोयमा! सादीयस्स अपज्जवसियस्स णत्थि अंतरं ॥ एतेसि णं भंते! जीवाणं कण्हलेसाणं नीललेसाणं काउले० तेउ० पम्ह० सुक्क० अलेसाण य कयरे २?०, गोयमा! सव्वत्थोवा सुक्कलेस्सा पम्हलेस्सा संखेज्जगुणा तेउलेस्सा संखिज्जगुणा अलेस्सा अणंतगुणा काउलेस्सा अणंतगुणा नीललेस्सा विसेसाहिया कण्हलेस्सा विसेसाहिया। सेत्तं सत्तविहा सव्वजीवा पन्नत्ता ॥ ( सू० २६६ )

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण सर्वजीवाः सप्तविधाः प्रज्ञप्तास्तद्यथा—कृष्णलेश्याः नीललेश्याः कापोतलेश्याः तेजोलेश्याः पद्मलेश्याः शुक्ललेश्याः अलेश्याः ॥ साम्प्रतमेतेषां कायस्थितिमाह—'कण्हलेसे णं भंते!' इत्यादि, कृष्णलेश्या जघन्यतोऽन्तर्मुहूर्त्तं, तिर्यङ्मनुष्याणां कृष्णलेश्याया अन्तर्मुहूर्त्तावस्थायित्वात्, उत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणि अन्तर्मुहूर्त्ताभ्यधिकानि, देवनारका हि पाश्चात्यभवगतचरमान्तर्मुहूर्त्तादारभ्याग्रेतनभवगतप्रथमान्तर्मुहूर्त्तं यावदवस्थितलेश्याकाः, अधःसप्तमपृथिवीनारकाश्च कृष्णलेश्याकाः पाश्चात्याग्रेतनभवगतचरमादिमान्तर्मुहूर्त्ते द्वे अप्येकमन्तर्मुहूर्त्तं, तस्यासङ्ख्यातभेदात्मकत्वात्, तत उपपद्यन्ते कृष्णलेश्याकस्यान्तर्मुहूर्त्ताभ्यधिकानि त्रयस्त्रिंशत्सागरोपमाणि, नीललेश्याको जघन्यतोऽन्तर्मुहूर्त्तं तच्च प्राग्वत्, उत्कर्षतो दश सागरोपमाणि पल्योपमासङ्ख्येयभागाधिकानि, धूमप्रभाप्रथमप्रस्तटनारकाणां नीललेश्याकानामेतावत्स्थितिकत्वात्, पाश्चात्याग्रेतनभवगते च चरमादिमान्तर्मुहूर्त्ते पल्यो-

पमासङ्ख्येयभागान्तःप्रविष्टे न पृथग्विवक्षिते, कापोतलेश्याको जघन्येनान्तर्मुहूर्त्तं प्राग्वत्, उत्कर्पतस्त्रीणि सागरोपमाणि पल्योपमासङ्ख्येयभागाभ्यधिकानि, वालुकाप्रथमप्रस्तटगतनारकाणां कापोतलेश्याकानामेतावत्स्थितिकत्वात्, तेजोलेश्याको जघन्येनान्तर्मुहूर्त्तं तथैव उत्कर्षतो द्वे सागरोपमे पल्योपमासङ्ख्येयभागाभ्यधिके, ते चेशानदेवानामवसातव्ये, पद्मलेश्याको जघन्येनान्तर्मुहूर्त्तं प्राग्वत्, उत्कर्पतो दश सागरोपमाणि अन्तर्मुहूर्त्ताभ्यधिकानि, तानि ब्रह्मलोकवासिनां देवानामवसातव्यानि, शुक्ललेश्याको जघन्यतोऽन्तर्मुहूर्त्तं प्राग्वत्, उत्कर्पतस्त्रयस्त्रिंशत् सागरोपमाणि अन्तर्मुहूर्त्ताभ्यधिकानि, तानि चानुत्तरसुराणा प्रतिपत्तव्यानि, तेपा शुक्ललेश्याकत्वात् ॥ अन्तरचिन्ताया कृष्णलेश्याकस्यान्तरं जघन्यतोऽन्तर्मुहूर्त्तं, तिर्यङ्मनुष्याणामन्तर्मुहूर्त्तेन लेश्यापरावर्त्तनात्, उत्कर्पतस्त्रयस्त्रिंशत्सागरोपमाण्यन्तर्मुहूर्त्ताभ्यधिकानि, शुक्ललेश्योत्कृष्टकालस्य कृष्णलेश्यान्तरोत्कृष्टकालत्वात्, एवं नीललेश्याकापोतलेश्ययोरपि जघन्यत उत्कर्पतश्चान्तरं वक्तव्यं, तेजःपद्मशुक्लानामन्तरं जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्पतो वनस्पतिकालः, स च प्रतीत एवेति, अलेश्यस्य साद्यपर्यवसितस्य नास्त्यन्तरमपर्यवसितत्वात् ॥ अल्पबहुत्वचिन्तायां सर्वस्तोका. शुक्ललेश्याः, लान्तकादिदेवानां पर्याप्तगर्भव्युत्क्रान्तिककतिपयपञ्चेन्द्रियतिर्यङ्मनुष्याणां शुक्ललेश्यासम्भवात्, तेभ्यः पद्मलेश्याः सङ्ख्येयगुणाः, सनत्कुमारमाहेन्द्रब्रह्मलोककल्पवासिना सर्वेपा प्रभूतपर्याप्तगर्भव्युत्क्रान्तिकतिर्यङ्मनुष्याणा च पद्मलेश्याकत्वात्, अथ लान्तकादिदेवेभ्यः सनत्कुमारादिकल्पत्रयवासिनो देवा असङ्ख्यातगुणाः ततः शुक्ललेश्येभ्यः पद्मलेश्या असङ्ख्यातगुणाः प्राप्नुवन्ति, कथं सङ्ख्येयगुणा उक्ता.?, उच्यते, इह जघन्यपदेऽप्यसङ्ख्यातानां सनत्कुमारादिकल्पत्रयवासिभ्योऽसङ्ख्येयगुणाना पञ्चेन्द्रियतिरश्चा शुक्ललेश्या, तत. पद्मलेश्याकाः शुक्ललेश्याकेभ्यः सङ्ख्येयगुणाः, तेजोलेश्याका. तेभ्योऽपि सङ्ख्येयगुणाः, तेभ्योऽपि सङ्ख्येयगुणेपु तिर्यक्पञ्चेन्द्रियमनुष्येपु भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवेपु च

तेजोलेश्याभावात्, भावना सङ्ख्येयगुणत्वे प्राग्वत्, तेभ्योऽप्यनन्तगुणा अलेश्याः, सिद्धानामनन्तत्वात्, तेभ्योऽपि कापोतलेश्या अनन्तगुणाः, सिद्धेभ्योऽप्यनन्तगुणानां वनस्पतिकायिकाना कापोतलेश्यावतां सद्भावात्, तेभ्योऽपि नीललेश्या विशेषाधिकाः, तेभ्यो-ऽपि कृष्णलेश्या विशेषाधिकाः, क्लिष्टतराध्यवसायाना प्रभूततराणां सद्भावात् । उपसंहारमाह—'सेत्तं सत्तविहा सव्वजीवा पन्नत्ता' ॥ उक्ताः सप्तविधाः सर्वजीवाः, साम्प्रतमष्टविधानाह—

तत्थ जे ते एवमाहंसु अट्ठविहा सव्वजीवा पण्णत्ता ते णं एवमाहंसु, तंजहा—आभिणिबोहियनाणी सुय० ओहि० मण० केवल० मतिअन्नाणी सुयअण्णाणी विभंगअण्णाणी ॥ आभिणिबोहियणाणी णं भंते! आभिणिबोहियणाणीत्ति कालओ केवचिरं होति?, गोयमा! जह० अंतो० उक्को० छावट्ठिसागरोवमाइं सातिरेगाइं, एवं सुयणाणीवि । ओहिणाणी णं भंते!०?, जह० एक्कं समयं उक्को० छावट्ठिसागरोवमाइं सातिरेगाइं, मणपज्जवणाणी णं भंते!०? जह० एक्कं स० उक्क० देसूणा पुव्वकोडी, केवलणाणी णं भंते!०? सादीए अपज्जवसिते, मतिअण्णाणी णं भंते!०? मइअण्णाणी तिविहे पण्णत्ते तं० अणाइए वा अपज्जवसिए अणादीए वा सपज्जवसिए सातीए वा सपज्जवसिते, तत्थ णं जे से सादीए सपज्जवसिते से जह० अंतो० उक्को० अणंतं कालं जाव अवड्ढं पोग्गलपरियट्टं देसूणं, सुयअण्णाणी एवं चेव, विभंगअण्णाणी णं भंते! विभंग० जह० एक्कं समयं उ० तेत्तीसं सागरोवमाइं देसूणाए पुव्वकोडीए अब्भहियाइं ॥ आभिणिबोहियणाणिस्स

णं भंते! अंतरं कालओ०?, जह० अंतो० उक्क० अणंतं कालं जाव अवड्ढं पोग्गलपरियट्टं देसूणं, एवं सुयणाणिस्सवि, ओहिणाणिस्सवि, मणपज्जवणाणिस्सवि, केवलणाणिस्स णं भंते! अंतरं०?, सादीयस्स अपज्जवसियस्स णत्थि अंतरं। मइअण्णाणिस्स णं भंते! अंतरं०?, अणादीयस्स अपज्जवसियस्स णत्थि अंतरं, अणादीयस्स सपज्जवसियस्स णत्थि अंतरं, सादीयस्स सपज्जवसियस्स जह० अंतो० उक्को० छावट्ठिं सागरोवमाइं सातिरेगाइं, एवं सुयअण्णाणिस्सवि, विभंगणाणिस्स णं भंते! अंतरं०?, जह० अंतो० उक्को० वणस्सतिकालो॥ एएसि णं भंते! आभिणिवोहियणाणीणं सुयणाणि० ओहि० मण० केवल० मइअण्णाणि० सुयअण्णाणि० विभंगणाणीण य कतरे०?, गोयमा! सव्वत्थोवा जीवा मणपज्जवणाणी ओहिणाणी असंखेज्जगुणा आभिणिबोहियणाणी सुयणाणी एए दोवि तुल्ला विसेसाहिया, विभंगणाणी असंखिज्जगुणा, केवलणाणी अणंतगुणा, मइअण्णाणी सुयअण्णाणी य दोवि तुल्ला अणंतगुणा॥ (सू० २६७)

'तत्थे'त्यादि, तत्र ये ते एवमुक्तवन्तोऽष्टविधाः सर्वजीवाः प्रज्ञप्तास्त एवमुक्तवन्तस्तद्यथा—आभिनिवोधिकज्ञानिनः श्रुतज्ञानिनोऽवधिज्ञानिनो मनःपर्यवज्ञानिनः केवलज्ञानिनो मत्यज्ञानिनः श्रुताज्ञानिनो विभङ्गज्ञानिनश्च॥ कायस्थितिचिन्तायामाभिनिवोधिकज्ञानी जघन्येनान्तर्मुहूर्त्तमुत्कर्षतः षट्षष्टिं सागरोपमाणि सातिरेकाणि, एवं श्रुतज्ञान्यपि, अवधिज्ञानी जघन्यत एकं समयमुत्कर्षतः षट्षष्टिः सागरोपमाणि सातिरेकाणि, मनःपर्यवज्ञानी जघन्यत एकं समयमुत्कर्षतो देशोना पूर्वकोटी, केवलज्ञानी साद्यपर्यवसित, म-

स्रारः, अत्रान्तरे सर्वेषु जीवस्थानेष्वनन्तरमुद्धृत्त्योत्पद्यन्ते । भुजपरिसर्पाणामुत्कृष्टाऽवगाहना गव्यूतपृथक्त्वं, स्थितिरुत्कर्षतः पूर्वकोटी, उद्वर्त्तनाचिन्तायां द्वितीयपृथिव्या आरभ्य यावत्सहस्रारः, अत्रान्तरे सर्वेषु जीवस्थानेषूत्पादः ॥ खचरगर्भव्युत्क्रान्तिकपञ्चेन्द्रियभेदो यथा संमूर्च्छिमखचराणां, शरीरादिद्वारकलापचिन्तनं गर्भव्युत्क्रान्तिकजलचरवत्, नवरमवगाहनास्थित्युद्वर्त्तनासु नानात्वं, तत्रोत्कर्षतोऽवगाहना धनुष्पृथक्त्वं, जघन्यतः सर्वत्राप्यङ्गुलासङ्ख्येयभागप्रमाणा, स्थितिरपि जघन्यतः सर्वत्राप्यन्तर्मुहूर्त्तमुत्कर्षतोऽत्र पल्योपमासङ्ख्येयभागः, उद्वर्त्तना तृतीयपृथिव्या आरभ्य यावत्सहस्रारः, अत्रान्तरे सर्वेषु जीवस्थानेषूत्पादः, क्वचित्पुस्तकान्तरेऽवगाहनास्थित्योर्यथाक्रमं सङ्ग्रहणिगाथे—"जोयणसहस्स छग्गाउयाइं तत्तो य जोयणसहस्सं । गाउयपुहुत्त भुयगे धणुयपुहुत्तं च पक्खीसु ॥ १ ॥ गब्भंमि पुव्वकोडी तिन्नि य पलिओवमाइं परमाउं । उरभुयग पुव्वकोडी पलियअसंखेज्जभागो य ॥ २ ॥" अनयोर्व्याख्या—गर्भव्युत्क्रान्तिकानामेव जलचराणामुत्कृष्टावगाहना योजनसहस्रं, चतुष्पदानां षड् गव्यूतानि, उरःपरिसर्पाणां योजनसहस्रं, भुजपरिसर्पाणां गव्यूतपृथक्त्वं, पक्षिणां धनुष्पृथक्त्व । तथा गर्भव्युत्क्रान्तिकानामेव जलचराणामुत्कृष्टा स्थितिः पूर्वकोटी, चतुष्पदानां त्रीणि पल्योपमानि, उरगाणां भुजगानां च पूर्वकोटी, पक्षिणां पल्योपमासङ्ख्येयभाग इति॥ उत्पादविधिस्तु नरकेष्वस्माद्गाथाद्वयादवसेयः—"अस्सण्णी खलु पढमं दोच्चं च सरीसवा तइय पक्खी । सीहा जंति चउत्थिं उरगा पुण पंचमिं पुढविं ॥ १ ॥ छट्ठिं च इत्थियाउ मच्छा मणुया य सत्तमिं पुढविं । एसो परमुववाओ वोद्धव्वो नरयपुढवीसु ॥ २ ॥" उक्ताः पञ्चेन्द्रियतिर्यञ्चः, सम्प्रति मनुष्यप्रतिपादनार्थमाह—

१ असञ्ज्ञिन खलु प्रथमा द्वितीया च सरीसृपास्तृतीयां पक्षिण । सिंहा यान्ति चतुर्थीमुरगा पुन पञ्चमीं पृथ्वीम् ॥ १ ॥ षष्ठीं च स्त्रिय मत्स्या मनुष्याश्च सप्तमीं पृथ्वीं यावत् । एष परम उत्पातो योद्धव्यो नारकपृथ्वीषु ॥ २ ॥

त्यज्ञानी त्रिविधस्तद्यथा—अनाद्यपर्यवसितः अनादिसपर्यवसितः सादिसपर्यवसितश्च, तत्र योऽसौ सादिसपर्यवसितः स जघन्येनान्तर्मुहूर्त्तमुत्कर्षतोऽनन्तं कालं यावदपार्द्धं पुद्गलपरावर्त्तं देशोनं, एवं श्रुताज्ञान्यपि, विभङ्गज्ञानी जघन्येनैकं समयं, द्वितीयसमये मरणतः प्रतिपाते सम्यक्त्वलाभतो ज्ञानभावेन वा विभङ्गाभावात्, उत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणि देशोनया पूर्वकोट्याऽभ्यधिकानि, तानि च सुप्रतीतानि, अप्रतिपतितविभङ्गानां धन्वन्तरिप्रमुखाणां बहूनां सप्तमपृथिवीनरकगमनश्रवणात् ॥ अन्तरचिन्तायामाभिनिवोधिकज्ञानिनोऽन्तरं जघन्येनान्तर्मुहूर्त्तमुत्कर्षतोऽनन्तं कालं यावदपार्द्धं पुद्गलपरावर्त्तं देशोनं, एवं श्रुतज्ञानिनोऽवधिज्ञानिनो मनःपर्यवज्ञानिनश्चान्तर वक्तव्यं, केवलज्ञानिनः साद्यपर्यवसितस्य नास्त्यन्तरं, मत्यज्ञानिनः श्रुताज्ञानिनश्चानाद्यपर्यवसितस्यानादिसपर्यवसितस्य च नास्त्यन्तरं, सादिसपर्यवसितस्य जघन्येनान्तर्मुहूर्त्तमुत्कर्षतः षट्षष्टिः सागरोपमाणि, विभङ्गज्ञानिनो जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतोऽनन्तं कालं वनस्पतिकालः ॥ अल्पबहुत्वचिन्तायां सर्वस्तोका मनःपर्यवज्ञानिनः, तेभ्योऽवधिज्ञानिनोऽसङ्ख्येयगुणाः, तेभ्योऽप्याभिनिवोधिकज्ञानिनः श्रुतज्ञानिनश्च विशेषाधिकाः, स्वस्थाने तु द्वयेऽपि परस्परं तुल्याः, तेभ्योऽपि विभङ्गज्ञानिनोऽसङ्ख्येयगुणाः, मिथ्यादृशां प्राभूत्यात्, एतेभ्योऽपि केवलज्ञानिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्योऽपि मत्यज्ञानिनः श्रुताज्ञानिनश्च प्रत्येकमनन्तगुणाः, स्वस्थाने तु परस्परं तुल्याः, भावना सर्वत्रापि प्राग्वत्, केवलं सूत्रपुस्तकेष्वतिसङ्क्षेप इति विवृतं ॥

**अहवा अट्ठविहा सव्वजीवा पण्णत्ता, तंजहा—णेरइया तिरिक्खजोणिया तिरिक्खजोणिणीओ मणुस्सा मणुस्सीओ देवा देवीओ सिद्धा ॥ णेरइए णं भंते! नेरइयत्ति कालओ केवचिरं होति?, गोयमा? जहन्नेणं दस वाससहस्साइं उ० तेत्तीसं सागरोवमाइं, तिरिक्खजोणिए णं**

भंते!० २, जह० अंतोमु० उक्को० वणस्सतिकालो, तिरिक्खजोणिणी णं भंते!०?, जह० अंतो० उक्को० तिन्नि पलिओवमाइं पुव्वकोडिपुहुत्तमब्भहियाइं, एवं मणूसे मणूसी, देवे जहा नेरइए, देवी णं भंते!०?, जह० दस वाससहस्साइं उ० पणपन्नं पलिओवमाइं, सिद्धे णं भंते! सिद्धेत्ति०?, गोयमा! सादीए अपज्जवसिए। णेरइयस्स णं भंते! अंतरं कालओ केवचिरं होति?, जह० अंतो० उक्को० वणस्सतिकालो, तिरिक्खजोणियस्स णं भंते! अंतरं कालओ०?, जह० अंतो० उक्को० सागरोवमसतपुहुत्तं सातिरेगं, तिरिक्खजोणिणी णं भंते! अंतरं कालओ केवचिरं होति?, गोयमा! जह० अंतोमुहुत्तं उक्क० वणस्सतिकालो, एवं मणुस्सस्सवि मणुस्सीएवि, देवस्सवि देवीएवि, सिद्धस्स णं भंते! अंतरं सादीयस्स अपज्जवसियस्स णत्थि अंतरं ॥ एतेसि णं भंते! णेरइयाणं तिरिक्खजोणियाणं तिरिक्खजोणिणीणं मणूसाणं मणूसीणं देवाणं देवीणं सिद्धाण य कयरे०?, गोयमा! सव्वत्थोवा मणुस्सीओ मणुस्सा असंखेज्जगुणा नेरइया असंखिज्जगुणा तिरिक्खजोणिणीओ असंखिज्जगुणाओ देवा संखिज्जगुणा देवीओ संखेज्जगुणाओ सिद्धा अणंतगुणा तिरिक्खजोणिया अनंतगुणा। सेत्तं अट्ठविहा सव्वजीवा पण्णत्ता ॥ ( सू० २६८)

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण अष्टविधाः सर्वजीवा. प्रज्ञप्तास्तद्यथा—नैरयिकास्तिर्यग्योनास्तिर्यग्योन्यो मनुष्या मनुष्यो देवा देव्यः सिद्धाः। तत्र नैरयिकादीनां देवीपर्यन्ताना कायस्थितिरन्तरं च संसारसमापन्नसप्तविधप्रतिपत्ताविव, सिद्धस्तु कायस्थितिचि-

न्तायां साद्यपर्यवसितः, अन्तरचिन्तायां नास्त्यन्तरं ॥ अल्पबहुत्वं, सर्वस्तोका मनुष्याः, सङ्ख्येयकोटीकोटीप्रमाणत्वात्, ताभ्यो मानुष्योऽसङ्ख्येयगुणाः, श्रेण्यसङ्ख्येयभागप्रमाणत्वात्, तेभ्यो नैरयिका असङ्ख्येयगुणाः, तेभ्यस्तिर्यग्योन्योऽसङ्ख्येयगुणाः, ताभ्यो देवाः सङ्ख्येयगुणाः, तेभ्यो देव्यः सङ्ख्येयगुणाः, युक्तिः सर्वत्रापि संसारसमापन्नसप्तविधप्रतिपत्ताविव, देवीभ्यः सिद्धा अनन्तगुणाः, तेभ्योऽपि तिर्यग्योनिका अनन्तगुणाः । उपसंहारमाह—'सेत्तं अट्ठविहा सव्वजीवा पन्नत्ता' उक्ता अष्टविधाः सर्वजीवाः, सम्प्रति नवविधानाह—

तत्थ णं जे ते एवमाहंसु णवविधा सव्वजीवा पं० ते णं एवमाहंसु, तंजहा—एगिंदिया बेंदिया तेंदिया चउरिंदिया णेरइया पंचेंदियतिरिक्खजोणिया मणूसा देवा सिद्धा ॥ एगिंदिए णं भंते! एगिंदियत्ति कालओ केवचिरं होइ?, गोयमा! जह० अंतोमु० उक्को० वणस्स०, बेंदिए णं भंते! जह० अंतो० उक्को० संखेज्जं कालं, एवं तेइंदिएवि, चउ०, णेरइया णं भंते!० २ जह० दस वाससहस्साइं उक्को० तेत्तीसं सागरोवमाइं, पंचेंदियतिरिक्खजोणिए णं भंते! जह० अंतो० उक्को० तिण्णि पलिओवमाइं पुव्वकोडिपुहुत्तमब्भहियाइं, एवं मणूसेवि, देवा जहा णेरइया, सिद्धे णं भंते!० २? सादीए अपज्जवसिए ॥ एगिंदियस्स णं भंते! अंतरं कालओ केवचिरं होति?, गोयमा! जह० अंतो० उक्को० दो सागरोवमसहस्साइं संखेज्जवासमब्भहियाइं, बेंदियस्स णं भंते! अंतरं कालओ केवचिरं होति?, गोयमा! जह० अंतो० उक्को० वणस्सति-

कालो, एवं तेंदियस्सवि चउरिंदियस्सवि णेरइयस्सवि पंचेंदियतिरिक्खजोणियस्सवि मणूसस्सवि देवस्सवि सव्वेसिमेवं अंतरं भाणियव्वं, सिद्धस्स णं भंते! अंतरं कालओ०?, सादीयस्स अपज्जवसियस्स णत्थि अंतरं ॥ एतेसि णं भंते! एगिंदियाणं बेइंदि० तेइंदि० चउरिंदियाणं णेरइयाणं पंचेंदियतिरिक्खजोणियाणं मणूसाणं देवाणं सिद्धाण य कयरे २?, गोयमा! सव्वत्थोवा मणुस्सा णेरइया असंखेज्जगुणा देवा असंखेज्जगुणा पंचेंदियतिरिक्खजोणिया असंखेज्जगुणा चउरिंदिया विसेसाहिया तेइंदिया विसेसाहिया बेंदिया विसे० सिद्धा अणंतगुणा एगिंदिया अणंतगुणा ॥ (सू० २६९)

'तत्थे'त्यादि, तत्र ये ते एवमुक्तवन्तो नवविधाः सर्वजीवाः प्रज्ञप्तास्त एवमुक्तवन्तस्तद्यथा—एकेन्द्रिया द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रिया नैरयिकास्तिर्यग्योनिका मनुष्या देवाः सिद्धाः ॥ अमीषां कायस्थितिचिन्तायामेकेन्द्रियस्य जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतो वनस्पतिकालः, द्वीन्द्रियस्य जघन्यतोऽन्तर्मुहुर्त्तमुत्कर्षतः सङ्ख्येयं कालं, एवं त्रीन्द्रियचतुरिन्द्रिययोरपि वक्तव्यं, नैरयिकस्य जघन्यतो दश वर्षसहस्राणि उत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणि, तिर्यग्योनिकपञ्चेन्द्रियस्य जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतः पूर्वकोटीपृथक्त्वाभ्यधिकानि त्रीणि पल्योपमानि, एवं मनुष्यस्यापि, देवानां यथा नैरयिकाणां ॥ अन्तरचिन्तायामेकेन्द्रियस्य जघन्यमन्तर्मुहूर्त्तमुत्कर्षतो द्वे सागरोपमसहस्रे सङ्ख्येयवर्षाभ्यधिके, द्वित्रिचतुरिन्द्रियनैरयिकतिर्यक्पञ्चेन्द्रियमनुष्यदेवानां जघन्यतः प्रत्येकमन्तर्मुहूर्त्तमुत्कर्षतो वनस्पतिकालः, सिद्धस्य साद्यपर्यवसितस्य नास्त्यन्तरं ॥ अल्पबहुत्वचिन्तायां सर्वस्तोका मनुष्या नैरयिका असङ्ख्येयगुणाः देवा असङ्ख्येयगुणाः तिर्य-

कृपञ्चेन्द्रिया असङ्ख्येयगुणाः चतुरिन्द्रिया विशेषाधिकाः त्रीन्द्रिया विशेषाधिकाः द्वीन्द्रिया विशेषाधिकाः सिद्धा अनन्तगुणाः एकेन्द्रिया अनन्तगुणाः ॥

अहवा णवविधा सव्वजीवा पण्णत्ता, तंजहा—पढमसमयनेरइया अपढमसमयणेरइया पढमसमयतिरिक्खजोणिया अपढमसमयतिरिक्खजोणिया पढमसमयमणूसा अपढमसमयमणूसा पढमसमयदेवा अपढमसमयदेवा सिद्धा य ॥ पढमसमयणेरइया णं भंते!० ?, गोयमा! एक्कं समयं, अपढमसमयणेरइयस्स णं भंते!० २?, जहन्नेणं दस वाससहस्साइं समऊणाइं, उक्को० तेत्तीसं सागरोवमाइं समऊणाइं, पढमसमयतिरिक्खजोणियस्स णं भंते!० ?, एक्कं समयं, अपढमसमयतिरिक्खजोणियस्स णं भंते!० ?, जह० खुड्डागं भवग्गहणं समऊणं उक्को० वणस्सतिकालो, पढमसमयमणूसे णं भंते!०, एक्कं समयं, अपढमसमयमणूस्से णं भंते!० ?, जह० खुड्डागं भवग्गहणं समऊणं उक्को० तिन्नि पलिओवमाइं पुव्वकोडिपुहुत्तमब्भहियाइं, देवे जहा णेरइए, सिद्धे णं भंते! सिद्धेत्ति कालओ केवचिरं होति?, गोयमा! सादीए अपज्जवसिते ॥ पढमसमयणेरइयस्स णं भंते! अंतरं कालओ० ?, गोयमा! जह० दस वाससहस्साइं अंतोमुहुत्तमब्भहियाइं उक्कोसेणं वणस्सतिकालो, अपढमसमयणेरइयस्स णं भंते! अंतरं० ?, जह० अंतो० उक्को० वणस्सतिकालो, पढमसमयतिरिक्खजोणियस्स णं भंते! अंतरं कालतो० ?, जह० दो खु-

डुागाइं भवग्गहणाइं समऊणाइं उक्को० वण०, अपढमसमयतिरिक्खजोणियस्स णं भंते! अंतरं कालतो०?, जह० खुड्डागं भवग्गहणं समयाहियं उ० सागरोवमसयपुहुत्तं सातिरेगं, पढमसमयमणूसस्स जहा पढमसमयतिरिक्खजोणियस्स, अपढमसमयमणूसस्स णं भंते! अंतरं कालओ०?, ज० खुड्डागं भवग्गह० समयाहियं उ० वण०, पढमसमयदेवस्स जहा पढमसमयणेरतियस्स, अपढमसमयदेवस्स जहा अपढमसमयणेरइयस्स, सिद्धस्स णं भंते!०, सादीयस्स अपज्जवसियस्स णत्थि अंतरं ॥ एएसि णं भंते! पढमसमयनेरइयाणं पढमस० तिरिक्खजोणियाणं पढमसमयमणूसाणं पढमस० देवाण य कयरे० २?, गोयमा! सव्वत्थोवा पढमसमयमणूसा पढमसमयणेरइया असंखिज्जगुणा पढमसमयदेवा असं० पढमस० तिरिक्खजो० असं०। एएसि णं भंते! अपढमस० नेरइयाणं अपढमसमयतिरिक्खजोणि० अपढमसमयमणूसाणं अपढमसमयदेवाण य कयरे० २?, गोयमा! सव्वत्थोवा अपढमसमयमणूसा अपढमसम० नेरइ० असं० अपढमसमयदेवा अस० अपढमसमयतिरि० अणंतगुणा। एतेसि णं भंते! पढमस० नेरइयाणं अपढमसम० णेरइयाण य कयरे० २?, गोयमा! सव्वत्थोवा पढमसमयणेरइया अपढमसमयणेरइया असंखेज्जगुणा, एतेसि णं भंते! पढमसमयतिरिजोक्ख० अपढमस० तिरि० जोणि० कतरे०?, गोयमा! सव्व० पढमसमयतिरि० अपढमसमयतिरि० जोणि० अणंत०, मणुयदेवअप्पाबहुयं जहा णेरइ-

याणं। एतेसि णं भंते! पढमस० णेरइ० पढमस० तिरिक्खाणं पढमस० मणूसाणं पढमसमयदेवाणं अपढमसमयनेरइ० अपढमसमयतिरिक्खजोणि० अपढमसमयमणूसा० अपढमसमयदेवाणं सिद्धाण य कयरे० २?, गोयमा! सव्व० पढमस० मणूसा अपढमसम० मणु० असं० पढमसमयनेरइ० असं० पढमसमयदेवा असंखे० पढमसमयतिरिक्खजो० असं० अपढमसमयनेर० असं० अपढमस० देवा असंखे० सिद्धा अणं० अपढमस० तिरि० अणंतगुणा। सेत्तं नवविहा सव्वजीवा पण्णत्ता ॥ (सू० २७०)

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण नवविधाः सर्वजीवाः प्रज्ञप्तास्तद्यथा—प्रथमसमयनैरयिका अप्रथमसमयनैरयिकाः प्रथमसमयतिर्यग्योनिका अप्रथमसमयतिर्यग्योनिकाः प्रथमसमयमनुष्या अप्रथमसमयमनुष्याः प्रथमसमयदेवा अप्रथमसमयदेवाः सिद्धाः ॥ कायस्थितिचिन्तायां प्रथमसमयनैरयिकस्य कायस्थितिरेकं समयं, अप्रथमसमयनैरयिकस्य जघन्यतो दश वर्षसहस्राणि समयोनानि उत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणि समयोनानि, प्रथमसमयतिर्यग्योनिकस्यैकं समयं, अप्रथमसमयतिर्यग्योनिकस्य जघन्यतः क्षुल्लकभवग्रहणं समयोनमुत्कर्षतो वनस्पतिकालः, प्रथमसमयमनुष्यस्यैकं समयं, अप्रथमसमयस्य जघन्यतः क्षुल्लकभवग्रहणं समयोनमुत्कर्षतः पूर्वकोटिपृथक्त्वाभ्यधिकानि त्रीणि पल्योपमानि, देवा यथा नैरयिकाः, सिद्धाः साद्यपर्यवसिताः ॥ अन्तरचिन्तायां प्रथमसमयनैरयिकस्य जघन्यमन्तरं दशवर्षसहस्राणि अन्तर्मुहूर्त्ताभ्यधिकानि, उत्कर्षतो वनस्पतिकालः, अप्रथमसमयनैरयिकस्य जघन्यतोऽन्तरमन्तर्मुहूर्त्तमुत्कर्षतो वनस्पतिकालः, प्रथमसमयतिर्यग्योनिकस्य जघन्यतो द्वे क्षुल्लकभवग्रहणे समयोने उत्कर्षतो वनस्पतिकालः, अप्र-

थमसमयतिर्यग्योनिकस्य जघन्यतः क्षुल्लकभवग्रहणं समयाधिकं उत्कर्षतः सागरोपमशतपृथक्त्वं सातिरेकं, प्रथमसमयमनुष्यस्य जघन्यतो द्वे क्षुल्लकभवग्रहणे समयोने उत्कर्षतो वनस्पतिकालः, अप्रथमसमयमनुष्यस्य जघन्यतः क्षुल्लकभवग्रहणं समयाधिकमुत्कर्षतो वनस्पतिकालः, प्रथमसमयदेवस्य जघन्यतो दश वर्षसहस्राणि अन्तर्मुहूर्त्ताभ्यधिकानि उत्कर्षतो वनस्पतिकालः, अप्रथमसमयदेवस्य जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतो वनस्पतिकालः, सिद्धस्य साद्यपर्यवसितस्य नास्त्यन्तरं ॥ सम्प्रत्यल्पबहुत्वचिन्ता, तत्राल्पबहुत्वान्यत्र चत्वारि, तद्यथा—प्रथमं प्रथमसमयनैरयिकादीनां, द्वितीयमप्रथमसमयनैरयिकादीनां, तृतीयं प्रथमाप्रथमसमयनैरयिकादीनां प्रत्येकं, चतुर्थं सर्वसमुदायेन, तत्र प्रथममिदम्—सर्वस्तोकाः प्रथमसमयमनुष्याः, तेभ्यः प्रथमसमयनैरयिका असङ्ख्येयगुणाः, तेभ्यः प्रथमसमयदेवा असङ्ख्येयगुणाः, तेभ्यः प्रथमसमयतिर्यग्योनिका असङ्ख्येयगुणाः, नारकादिशेषगतित्रयादागतानामेव प्रथमसमये वर्तमानानां प्रथमसमयतिर्यग्योनिकत्वात् । द्वितीयमेवम्—सर्वस्तोका अप्रथमसमयमनुष्याः, तेभ्योऽप्रथमसमयनैरयिका असङ्ख्येयगुणाः, तेभ्योऽप्रथमसमयदेवा असङ्ख्येयगुणाः, तेभ्योऽप्रथमसमयतिर्यग्योनिका अनन्तगुणाः, निगोदजीवानामनन्तत्वात् । तृतीयमेवम्—सर्वस्तोकाः प्रथमसमयनैरयिका अप्रथमसमयनैरयिका असङ्ख्येयगुणाः, तथा प्रथमसमयतिर्यग्योनिकाः सर्वस्तोकाः अप्रथमसमयतिर्यग्योनिका अनन्तगुणाः, तथा सर्वस्तोकाः प्रथमसमयमनुष्या. अप्रथमसमयमनुष्या असङ्ख्येयगुणाः, तथा सर्वस्तोकाः प्रथमसमयदेवाः अप्रथमसमयदेवा असङ्ख्येयगुणाः । सर्वसमुदायगतं चतुर्थमेवम्—सर्वस्तोकाः प्रथमसमयमनुष्या. अप्रथमसमयमनुष्या असङ्ख्येयगुणाः, तेभ्यः प्रथमसमयनैरयिका असङ्ख्येयगुणाः, तेभ्योऽपि प्रथमसमयदेवा असङ्ख्येयगुणाः, तेभ्योऽपि प्रथमसमयतिर्यग्योनिका असङ्ख्येयगुणाः, तेभ्योऽपि अप्रथमसमयनैरयिका असङ्ख्येयगुणाः, तेभ्योऽप्यप्रथमसमयदेवा असङ्ख्येयगुणाः, तेभ्यः सिद्धा अनन्तगुणाः, तेभ्योऽप्रथमसमय-

तिर्यग्योनिका अनन्तगुणाः । उपसंहारमाह—'सेत्तं नवविहा सव्वजीवा पण्णत्ता' ॥ उक्ता नवविधाः सर्वजीवाः, सम्प्रति दशविधानाह—

तत्थ णं जे ते एवमाहंसु दसविधा सव्वजीवा पण्णत्ता ते णं एवमाहंसु, तंजहा—पुढविकाइया आउकाइया तेउकाइया वाउकाइया वणस्सतिकाइया बिंदिया तिंदिया चउरिं० पंचें० अणिंदिया ॥ पुढविकाइए णं भंते! पुढविकाइएत्ति कालओ केवचिरं होति?, गोयमा! जह० अंतो० उक्को० असंखेज्जं कालं असंखेज्जाओ उस्सप्पिणीओसप्पिणीओ कालओ खेत्तओ असंखेज्जा लोया, एवं आउतेउवाउकाइए, वणस्सतिकाइए णं भंते!० २?, गोयमा! जह० अंतो० उक्को० वणस्सतिकालो, बेंदिए णं भंते!०?, जह० अंतो० उक्को० संखेज्जं कालं, एवं तेइंदिएवि चउरिंदिएवि, पंचिंदिए णं भंते!०?, गोयमा! जह० अंतो० उक्को० सागरोवमसहस्सं सातिरेगं; अणिंदिए णं भंते!०?, सादीए अपज्जवसिए ॥ पुढविकाइयस्स णं भंते! अंतरं कालओ केवच्चिरं होति?, गोयमा! जह० अंतो० उक्को० वणस्सतिकालो, एवं आउकाइयस्स तेउ० वाउ०, वणस्सइकाइयस्स णं भंते! अंतरं कालओ०?, जा चेव पुढविकाइयस्स संचिट्ठणा, वियतियचउरिंदियपंचेंदियाणं एतेसिं चउण्हंपि अंतरं जह० अंतो० उक्को० वणस्सइकालो, अणिंदियस्स णं भंते! अंतरं कालओ केवचिरं होति?, गोयमा! सादीयस्स अपज्जवसियस्स णत्थि अंतरं ॥ ए-

तेसि णं भंते! पुढविकाइयाणं आउ० तेउ० वाउ० वण० बेंदियाणं तेइंदियाणं चउरिं० पंचेंदियाणं अणिंदियाण य कतरे २०?, गोयमा! सव्वत्थोवा पंचेंदिया चतुरिंदिया विसेसाहिया तेइंदि० विसे० बेंदि० विसे० तेउकाइया असंखिज्जगुणा पुढविकाइया वि० आउ० वि० वाउ० वि० अणिंदिया अणंतगुणा वणस्सतिकाइया अणंतगुणा ॥ (सू० २७१)

'तत्थे'त्यादि, तत्र ये ते एवमुक्तवन्तो दशविधाः सर्वजीवाः प्रज्ञप्तास्त एवमुक्तवन्तस्तद्यथा—पृथिवीकायिकाः अप्कायिकाः तेजस्कायिकाः वायुकायिका वनस्पतिकायिका. द्वीन्द्रिया. त्रीन्द्रिया. चतुरिन्द्रिया पञ्चेन्द्रियाः अनिन्द्रियाः, तत्र पृथिवीकायिकस्य कायस्थितिर्जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतोऽसङ्ख्येय कालं, असङ्ख्येया उत्सर्पिण्यवसर्पिण्य कालत. क्षेत्रतोऽसङ्ख्येया लोकाः, एवमप्तेजोवायूनामपि वक्तव्यं, वनस्पतिकायिकस्य जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतोऽनन्तं कालं, अनन्ता उत्सर्पिण्यवसर्पिण्यः कालत. क्षेत्रतोऽनन्ता लोका असङ्ख्येयाः पुद्गलपरावर्त्ता आवलिकाया असङ्ख्येयो भागः, द्वित्रिचतुरिन्द्रियाणां जघन्यतः प्रत्येकमन्तर्मुहूर्त्तमुत्कर्षत. प्रत्येकं सङ्ख्येय. काल., पञ्चेन्द्रियस्य जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतः सागरोपमशतपृथक्त्वं सातिरेक, अनिन्द्रियः साद्यपर्यवसितः ॥ अन्तरचिन्तायां पृथिवीकायिकस्य जघन्यतोऽन्तरमन्तर्मुहूर्त्तमुत्कर्षतो वनस्पतिकालः, एवं यावत्पञ्चेन्द्रियस्य, नवरं वनस्पतिकायिकस्योत्कर्षतोऽसङ्ख्येयं कालं, असङ्ख्येया उत्सर्पिण्यवसर्पिण्यः कालतः क्षेत्रतोऽसङ्ख्येया लोका, अनिन्द्रियस्य नास्त्यन्तरं, साद्यपर्यवसितत्वात् ॥ अल्पबहुत्वचिन्तायां सर्वस्तोकाः पञ्चेन्द्रियाश्चतुरिन्द्रिया विशेषाधिकाः त्रीन्द्रिया विशेषाधिकाः द्वीन्द्रिया विशेषाधिकाः तेजस्कायिका

से किं तं मणुस्सा ?, २ दुविहा पण्णत्ता, तंजहा—संमुच्छिममणुस्सा य गब्भवक्कंतियमणुस्सा य ॥ कहि णं भंते ! संमुच्छिममणुस्सा संमुच्छंति ?, गोयमा ! अंतो मणुस्सखेत्ते जाव करेंति । तेसि णं भंते ! जीवाणं कति सरीरगा पण्णत्ता ?, गोयमा ! तिन्नि सरीरगा पन्नत्ता, तंजहा—ओरालिए तेयए कम्मए, सेतं संमुच्छिममणुस्सा । से किं तं गब्भवक्कंतियमणुस्सा ?, २ तिविहा पण्णत्ता, तंजहा—कम्मभूमया अकम्मभूमगा अंतरदीवजा, एवं माणुस्सभेदो भाणियव्वो जहा पण्णवणाए तहा णिरवसेसं भाणियव्वं जाव छउमत्था य केवली य, ते समासतो दुविहा पण्णत्ता, तंजहा—पज्जत्ता य अपज्जत्ता य । तेसि णं भंते ! जीवाणं कति सरीरा प० ?, गोयमा ! पंच सरीरया, तंजहा—ओरालिए जाव कम्मए । सरीरोगाहणा जहन्नेणं अंगुलअसंखेज्ज० उक्कोसेणं तिण्णि गाउयाइं छच्चेव संघयणा छस्संठाणा । ते णं भंते ! जीवा किं कोहकसाई जाव लोभकसाई अकसाई ?, गोयमा ! सव्वेवि । ते णं भंते ! जीवा किं आहारसन्नोवउत्ता० लोभसन्नोवउत्ता नोसन्नोवउत्ता ?, गोयमा ! सव्वेवि । ते णं भंते ! जीवा किं कण्हलेसा य जाव अलेसा ?, गोयमा ! सव्वेवि । सोइंदियोवउत्ता जाव नोइंदियोवउत्तावि, सव्वे समुग्घाता, तंजहा—वेयणासमुग्घाते जाव केवलिसमुग्घाए, सन्नीवि नोसन्नी असन्नीवि, इत्थिवेयावि जाव अवेदावि, पंच पज्जत्ती, तिविहावि दिट्ठी, चत्तारि दंसणा, णाणीवि अण्णाणीवि, जे णाणी ते अत्थेगतिया दुणाणी

असङ्ख्येयगुणाः पृथिवीकायिका विशेषाधिकाः अप्कायिका विशेषाधिकाः वायुकायिका विशेषाधिकाः अनिन्द्रिया अनन्तगुणाः वनस्पतिकायिका अनन्तगुणाः ॥

अहवा दसविहा सव्वजीवा पण्णत्ता, तंजहा—पढमसमयणेरइया अपढमसमयनेरइया पढमसमयतिरिक्खजोणिया अपढमसमयतिरिक्खजोणिया पढमसमयमणूसा अपढमसमयमणूसा पढमसमयदेवा अपढमसमयदेवा पढमसमयसिद्धा अपढमसमयसिद्धा ॥ पढमसमयनेरइया णं भंते! पढमसमयणेरइएत्ति कालओ केवचिरं होति?, गोयमा! एक्कं समयं, अपढमसमयनेरइए णं भंते!०? जहन्नेणं दस वाससहस्साइं समऊणाइं उक्कोसेणं तेत्तीसं सागरोवमाइं समऊणाइं, पढमसमयतिरिक्खजोणिया णं भंते!० २?, गोयमा! एक्कं समयं, अपढमसमयतिरिक्ख० जह० खुड्डागं भवग्गहणं समऊणं उक्को० वणस्सइकालो, पढमसमयमणूसे णं भंते!० २?, एक्कं समयं, अपढमस० मणूसे णं भंते!०?, जह० खुड्डागं भवग्गहणं समऊणं उक्को० तिण्णि पलिओवमाइं पुव्वकोडिपुहुत्तमब्भहियाइं, देवे जहा णेरइए, पढमसमयसिद्धे णं भंते!० २?, एक्कं समयं, अपढमसमयसिद्धे णं भंते!० २?, सादीए अपज्जवसिए। पढमसमयणेर० भंते! अंतरं कालओ०?, ज० दस वाससहस्साइं अंतोमुहुत्तमब्भहियाइं उक्को० वण०, अपढमसमयणेर० अंतरं कालओ केव०?, जह० अंतो० उ० वण०, पढमसमयतिरिक्खजोणियस्स अंतरं केवचिरं होइ?, गो-

यमा! जह० दो खुड्डागभवग्गहणाइं समऊणाइं उक्को० वण०, अपढमसमयतिरिक्खजोणियस्स णं भंते!०?, जह० खुड्डागभवग्गहणं समयाहियं उक्को० सागरोवमसयपुहुत्तं सातिरेगं, पढमसमयमणूसस्स णं भंते! अंतरं कालओ०?, जह० दो खुड्डागभवग्गहणाइं समऊणाइं उक्को० वण०, अपढमसमयमणूसस्स णं भंते! अंतरं०?, जह० खुड्डागं भव० समयाहियं उक्को० वणस्स०, देवस्स णं अंतरं जहा णेरइयस्स, पढमसमयसिद्धस्स णं भंते! अंतरं?, णत्थि, अपढमसमयसिद्धस्स णं भंते! अंतरं कालओ केवचिरं होति?, गोयमा! सादीयस्स अपज्जवसियस्स णत्थि अंतरं ॥ एतेसि णं भंते! पढमस० णेर० पढमस० तिरिक्खजोणियाणं पढमसमयमणूसाणं पढमसमयदेवाणं पढमसमयसिद्धाण य कतरे २०?, गोयमा! सव्वत्थोवा पढमसमयसिद्धा पढमसमयमणूसा असंखे० पढमस० णेरइया असंखेज्जगुणा पढमस० देवा असं० पढमस० तिरि० असं० । एतेसि णं भंते! अपढमसमयनेरइयाणं जाव अपढमसमयसिद्धाण य कयरे०?, गोयमा! सव्वत्थोवा अपढमस० मणूसा अपढमस० नेरइया असंखि० अपढमस० देवा असंखि० अपढमस० सिद्धा अणंतगुणा अपढमस० तिरि० जो० अणंतगुणा । एतेसि णं भंते! पढमस० णेरइयाणं अपढमस० णेरइयाण य कतरे २?, गोयमा! सव्वत्थोवा पढमस० णेरइया अपढमस० नेरइया असंखे०, एतेसि णं भंते! पढमस० तिरिक्खजोणियाणं अपढमस० तिरिक्खजोणि-

याण य कतरे २? गोयमा! सव्वत्थोवा पढमसमयतिरिक्खजो० अपढमस० तिरिक्खजोणिया अणंतगुणा, एतेसि णं भंते! पढमस० मणूसाणं अपढमसमयमणूसाण य कतरे २?, गोयमा! सव्वत्थोवा पढमसम० मणूसा अपढमस० मणूसा असंखे०, जहा मणूसा तहा देवावि, एतेसि णं भंते! पढमसमयसिद्धाणं अपढमसमयसिद्धाण य कयरे २ अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सव्वत्थोवा पढमसमयसिद्धा अपढमसम० सिद्धा अणंतगुणा। एतेसि णं भंते! पढमसमयणेरइयाणं अपढमसमयणेरइयाणं पढमस० तिरि० जोणि० अपढमस० तिरि० जो० प० समयमणू० अपढमस० मणू० पढ० स० देवाणं अप० सम० देवाणं पढमस० सिद्धाणं अपढमसम० सिद्धाण य कतरे २ अप्पा वा बहुया वा तुल्ला वा विसे०?, गोयमा! सव्वत्थोवा पढमस० सिद्धा पढमस० मणू० असं० अप० सम० मणू० असंखि० पढमसम० णेरइ० असं० पढमस० देवा असं० पढमस० तिरि० असं० अपढमस० णेर० असंखे० अपढमस० देवा असं० अपढमस० सिद्धा अणंत० अपढमस० तिरि० अणंतगुणा। सेत्तं दसविहा सव्वजीवा पण्णत्ता। सेत्तं सव्वजीवाभिगमे ॥ (सू० २७२) ॥ इति जीवाजीवाभिगमसुत्तं सम्मत्तं ॥ सूत्रे ग्रन्थाग्रम् ४७५० ॥

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण दशविधाः सर्वजीवाः प्रज्ञप्तास्तद्यथा—प्रथमसमयनैरयिकाः अप्रथमसमयनैरयिकाः प्रथम-

जघन्यपदादुत्कृष्टपदमधिकमवसातव्यं, अन्यथोभयपदोपन्यासायोगात्, उभयप्रतिषेधवर्त्ती सिद्धः, स च साद्यपर्यवसितः । अन्तर-चिन्तायां पर्याप्तकस्य जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तमन्तरं, अपर्याप्तकाल एव हि पर्याप्तकस्यान्तरं, अपर्याप्तककालश्च जघन्यत उत्कर्ष-तश्चान्तर्मुहूर्त्तं, अपर्याप्तकस्य जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतः सागरोपमशतपृथक्त्वं सातिरेकं, पर्याप्तककालस्य जघन्यत उत्कर्षतश्चैताव-त्प्रमाणत्वात्, नोपर्याप्तनोअपर्याप्तकस्य नास्त्यन्तरमपर्यवसितत्वात् ॥ अल्पबहुत्वचिन्तायां सर्वस्तोका नोपर्याप्तकनोअपर्याप्तकाः, सि-द्धाना शेषजीवापेक्षयाऽल्पत्वात्, अपर्याप्तका अनन्तगुणाः, निगोदजीवानामपर्याप्तानामनन्तानन्ताना सदा लभ्यमानत्वात्, तेभ्यः प-र्याप्तकाः सङ्ख्येयगुणाः, सूक्ष्मेष्वोघतोऽपर्याप्तकेभ्यः पर्याप्तकानां सङ्ख्येयगुणतयाऽवाप्यमानत्वात् ॥

**अहवा तिविहा सव्वजीवा पं० तं०—सुहुमा बायरा नोसुहुमानोबायरा, सुहुमे णं भंते! सुहुमेत्ति कालओ केवचिरं०?, जहण्णेणं अंतोमुहुत्तं उक्कोसे० असंखिज्जं कालं पुढविकालो, बायरा जह० अंतो० उक्को० असंखिज्जं कालं असंखिज्जाओ उस्सप्पिणीओसप्पिणीओ कालओ खेत्तओ अंगुलस्स असंखिज्जइभागो, नोसुहुमनोबायरए साइए अपज्जवसिए, सुहुमस्स अंतरं बायरकालो, बायरस्स अंतरं सुहुमकालो, तइयस्स नोसुहुमणोबायरस्स अंतरं नत्थि। अप्पाबहु० सव्वत्थोवा नोसुहुमानोबायरा बायरा अणंतगुणा सुहुमा असंखेज्जगुणा ॥ (सू० २५३)**

'अहवे'त्यादि, अथवा प्रकारान्तरेण सर्वजीवास्त्रिविधाः प्रज्ञप्तास्तद्यथा—सूक्ष्मा बादराः नोसूक्ष्मानोबादराः । कायस्थितिचिन्तायां

सूक्ष्मस्य जघन्यतोऽन्तर्मुहूर्त्तं, तत ऊर्द्धं भूयोऽपि वादरेषु कस्याप्यागमनात्, उत्कर्षतोऽसङ्ख्येयं कालं, असङ्ख्येया उत्सर्प्पिण्यवसर्प्पिण्यः कालतः क्षेत्रतोऽसङ्ख्येया लोकाः, वादरस्य जघन्यतोऽन्तर्मुहूर्त्तं, तदनन्तरं कस्यचिद् भूयोऽपि सूक्ष्मेषु गमनात्, उत्कर्षतोऽसङ्ख्येयं कालं, असङ्ख्येया उत्सर्प्पिण्यवसर्प्पिण्यः कालतः क्षेत्रतोऽङ्गुलस्यासङ्ख्येयो भागः, एतावतः कालादूर्द्धं नियोगतः संसारिणः सूक्ष्मेषु गमनात्, उभयप्रतिषेधवर्त्ती सिद्धः स च साद्यपर्यवसितः ॥ अन्तरचिन्तायां सूक्ष्मस्यान्तरं जघन्यतोऽन्तर्मुहूर्त्तं उत्कर्षतोऽसङ्ख्येयं कालमसङ्ख्येया उत्सर्प्पिण्यवसर्प्पिण्यः कालतः क्षेत्रतोऽङ्गुलस्यासङ्ख्येयो भागः, वादरकालस्य जघन्यत उत्कर्षतश्चैतावत्प्रमाणत्वात्। वादरस्यान्तरं जघन्येनान्तर्मुहूर्त्तं उत्कर्षतोऽसङ्ख्येयं कालं, असङ्ख्येया उत्सर्प्पिण्यवसर्प्पिण्यः कालतः क्षेत्रतोऽसङ्ख्येया लोकाः, सूक्ष्मस्य जघन्यत उत्कर्षतश्चैतावत्कालप्रमाणत्वात्, नोसूक्ष्मनोवादरस्य साद्यपर्यवसितस्य, हेतौ षष्ठी, 'निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शन'मिति न्यायात्, ततोऽयमर्थः—साद्यपर्यवसितत्वान्नास्त्यन्तरमन्यथाऽपर्यवसितत्वायोगात्। अल्पवहुत्वचिन्तायां सर्वस्तोका नोसूक्ष्मानोवादराः, सिद्धानामल्पत्वात्, तेभ्यो वादरा अनन्तगुणाः, वादरनिगोदजीवानां सिद्धेभ्योऽप्यनन्तत्वात्, तेभ्यः सूक्ष्मा असङ्ख्येयगुणाः, वादरनिगोदेभ्यः सूक्ष्मनिगोदानामसङ्ख्यातगुणत्वात् ॥

**अहवा तिविहा सव्वजीवा पण्णत्ता, तंजहा—सण्णी असण्णी नोसण्णीनोअसण्णी, सन्नी भंते! कालओ०?, जह० अंतो० उक्को० सागरोवमसतपुहुत्तं सातिरेगं, असण्णी जह० अंतो० उक्को० वणस्सतिकालो, नोसण्णीनोअसण्णी साइए अपज्जवसिते। सण्णिस्स अंतरं जह० अंतो० उक्को० वणस्सतिकालो, असण्णिस्स अंतरं जह० अंतो० उक्को० सागरोवमसयपुहुत्तं सातिरेगं,**

**ततियस्स णत्थि अंतरं। अप्पाबहू० सव्वत्थोवा सण्णी नोसन्नीनोअसण्णी अणंतगुणा असण्णी अणंतगुणा ॥ (सू० २५४)**

'अहवा तिविहा' इत्यादि, 'अथवा' प्रकारान्तरेण त्रिप्रकाराः सर्वजीवाः प्रज्ञप्तास्तद्यथा—सञ्ज्ञिनोऽसञ्ज्ञिनो नोसञ्ज्ञिनोऽसञ्ज्ञिनश्च, तत्र सञ्ज्ञिनः—समनस्काः असञ्ज्ञिनः—अमनस्काः उभयप्रतिषेधवर्त्तिनः सिद्धाः। कायस्थितिचिन्तायां सञ्ज्ञिनो जघन्येनान्तर्मुहूर्त्तं, तत ऊर्द्ध्वं भूयोऽपि कस्यचिद् सञ्ज्ञिषु गमनात्, उत्कर्षतः सागरोपमशतपृथक्त्व सातिरेकं, तत ऊर्द्ध्वमवश्यं संसारिणः सतोऽसञ्ज्ञिषु गमनात्, असञ्ज्ञिनो जघन्यतोऽन्तर्मुहूर्त्तं, तत ऊर्द्ध्वं कस्यापि पुनरपि सञ्ज्ञिषु गमनात्, उत्कर्षतोऽनन्तं कालं, स चानन्तः कालो वनस्पतिकालः, स चैवं—अनन्ता उत्सर्पिण्यवसर्पिण्य. कालतः, क्षेत्रतोऽनन्ता लोकाः, असङ्ख्येयाः पुद्गलपरावर्त्ताः, ते च पुद्गलपरावर्त्ता आवलिकाया असङ्ख्येयो भागः, उभयप्रतिषेधवर्त्ती सिद्धः, स च साद्यपर्यवसितः। अन्तरचिन्तायां सञ्ज्ञिनोऽन्तरं जघन्येनान्तर्मुहूर्त्तं उत्कर्षतोऽनन्तं कालं, स चानन्तकालो वनस्पतिकालः, असञ्ज्ञिकालस्य जघन्यत उत्कर्षतश्चैतावत्प्रमाणत्वात्, असञ्ज्ञिनोऽन्तरं जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतः सागरोपमशतपृथक्त्वं, सञ्ज्ञिकालस्य जघन्यत उत्कर्षतश्चैतावत्प्रमाणत्वात्, नोसञ्ज्ञिनोनोअसञ्ज्ञिनः साद्यपर्यवसितस्य नास्त्यन्तरमपर्यवसितत्वात्। अल्पबहुत्वचिन्तायां सर्वस्तोकाः सञ्ज्ञिनो, देवनारकगर्भव्युत्क्रान्तिकतिर्यग्मनुष्याणामेव सञ्ज्ञित्वात्, तेभ्य उभयप्रतिषेधवर्त्तिनोऽनन्तगुणाः, वनस्पतिवर्जशेषजीवेभ्यः सिद्धानामनन्तगुणत्वात्, तेभ्योऽसंज्ञिनोऽनन्तगुणाः वनस्पतीनां सिद्धेभ्योऽप्यनन्तगुणत्वात् ॥

**अहवा तिविहा सव्वजीवा पण्णत्ता, तंजहा—भवसिद्धिया अभवसिद्धिया नोभवसिद्धिया-**

**नोअभवसिद्धिया, अणाइया सपज्जवसिया भवसिद्धिया, अणाइया अपज्जवसिया अभवसिद्धिया, साई अपज्जवसिया नोभवसिद्धियानोअभवसिद्धिया। तिण्हंपि नत्थि अंतरं। अप्पाबहु० सव्वत्थोवा अभवसिद्धिया णोभवसिद्धीयानोअभवसिद्धीया अनंतगुणा भवसिद्धिया अणंतगुणा। (सू० २५५) अहवा तिविहा सव्व० तंजहा—तसा थावरा नोतसानोथावरा, तसस्स णं भंते! कालओ०?, जह० अंतो० उक्को० दो सागरोवमसहस्साइं साइरेगाइं, थावरस्स संचिट्ठणा वणस्सतिकालो, णोतसानोथावरा साती अपज्जवसिया। तसस्स अंतरं वणस्सतिकालो, थावरस्स अंतरं दो सागरोवमसहस्साइं साइरेगाइं, णोतसथावरस्स णत्थि अंतरं। अप्पाबहु० सव्वत्थोवा तसा नोतसानोथावरा अणंतगुणा थावरा अणंतगुणा। से तं तिविधा सव्वजीवा पण्णत्ता (सू० २५६)**

'अहवे'त्यादि, अथवा—प्रकारान्तरेण त्रिविधाः सर्वजीवाः प्रज्ञप्तास्तद्यथा—'भवसिद्धिकाः' भवे सिद्धिर्येषां ते भवसिद्धिका भव्या इत्यर्थः, अभवसिद्धिका—अभव्याः, नोभवसिद्धिकानोअभवसिद्धिकाः सिद्धाः, सिद्धानां संसारातीततया भवसिद्धिकत्वाभवसिद्धिकत्वविशेषणरहितत्वात्। कायस्थितिचिन्तायां भवसिद्धिकोऽनादिसपर्यवसितोऽन्यथा भवसिद्धिकत्वायोगात्, अभवसिद्धिकोऽनाद्यपर्यवसितः, अभवसिद्धिकत्वादेवान्यथा तद्भावायोगात्, नोभवसिद्धिकोनोअभवसिद्धिकः साद्यपर्यवसितः, सिद्धस्य संसारक्षयात्प्रादुर्भूतस्य प्रतिपातासम्भवात्। अन्तरचिन्तायां भवसिद्धिकस्यानादिसपर्यवसितस्य नास्त्यन्तरं, भवसिद्धिकत्वापगमे पुनर्भवसिद्धिकत्वा-

योगात्, अभवसिद्धिकस्य नास्त्यन्तरमपर्यवसिततया सदा तद्भावापरित्यागात्, नोभवसिद्धिकनोअभवसिद्धिकस्यापि साद्यपर्यवसितस्य नास्त्यन्तरमपर्यवसितत्वात्। अल्पबहुत्वचिन्तायां सर्वस्तोका अभवसिद्धिकाः, अभव्यानां जघन्ययुक्तानन्तकतुल्यत्वात्, नोभवसिद्धिकानोअभवसिद्धिका अनन्तगुणाः, सिद्धानामभव्येभ्योऽनन्तगुणत्वात्, तेभ्यो भवसिद्धिका अनन्तगुणाः, भव्यराशेः सिद्धेभ्योऽप्यनन्तगुणत्वात्। उपसंहारमाह—'सेत्तं तिविहा सव्वजीवा पन्नत्ता' ॥ तदेवं त्रिविधसर्वजीवप्रतिपत्तिरुक्ता, सम्प्रति चतुर्विधसर्वजीवप्रतिपत्तिमभिधित्सुराह—

**तत्थ जे ते एवमाहंसु—चउव्विहा सव्वजीवा पण्णत्ता ते एवमाहंसु तं०—मणजोगी वइजोगी कायजोगी अजोगी। मणजोगी णं भंते! जह० एक्कं समयं उक्को० अंतोमु०, एवं वइजोगीवि, कायजोगी जह० अंतो० उक्को० वणस्सतिकालो, अजोगी सातीए अपज्जवसिए। मणजोगिस्स अंतरं जहण्णेणं अंतोमुहुत्तं उक्को० वणस्सइकालो, एवं वइजोगिस्सवि, कायजोगिस्स जह० एक्कं समयं उक्को० अंतो०, अयोगिस्स णत्थि अंतरं। अप्पाबहु० सव्वत्थोवा मणजोगी वइजोगी संखिज्जगुणा अजोगा अणंतगुणा कायजोगी अणंतगुणा ॥ (सू० २५७)**

'तत्थ जे ते एव'मित्यादि, तत्र ये ते एवमुक्तवन्तश्चतुर्विधाः सर्वजीवाः प्रज्ञप्तास्त एवमुक्तवन्तस्तद्यथा—मनोयोगिनो वाग्योगिन. काययोगिनोऽयोगिनश्चेति, तत्र कायस्थितिचिन्तायां मनोयोगी जघन्यत एकं समयं, विशिष्टमनोयोग्यपुद्गलग्रहणापेक्षमेतत्सूत्रं, ततो द्वितीये समये मरणेनोपरमतो भापकवदेकसमयता प्रतिपत्तव्या, उत्कर्षतोऽन्तर्मुहूर्त्तं, तथा च जीवस्वभावतया नियमत उपरमात्

म्यग्दृष्टेर्ज्ञानं मिथ्यादृष्टेर्विपर्यासः" इति, उपपातद्वारे उपपातो नैरयिकेभ्यः सप्तपृथ्वीभाविभ्योऽपि, तिर्यग्योनिकेभ्योऽप्यसङ्ख्यातवर्षायुष्कवर्जेभ्यः सर्वेभ्योऽपि, मनुष्येभ्योऽकर्मभूमिजान्तरद्वीपजासङ्ख्यातवर्षायुष्कवर्जकर्मभूमिभ्यो, देवेभ्योऽपि यावत्सहस्रारात्, परतः प्रतिषेधः, स्थितिद्वारे जघन्यतः स्थितिरन्तर्मुहूर्त्तमुत्कर्षत. पूर्वकोटी, च्यवनद्वारेऽनन्तरमुद्वृत्य सहस्रारात्परे ये देवास्तान् वर्जयित्वा शेषेषु सर्वेष्वपि जीवस्थानेषु गच्छन्ति, अत एव गत्यागतिद्वारे चतुरागतिकाश्चतुर्गतिका', 'परीत्ता.' प्रत्येकशरीरिणोऽसङ्ख्येयाः प्रज्ञप्ता, हे श्रमण ! हे आयुष्मन् !, उपसंहारमाह—'सेत्तं जलयरा गब्भवक्कंतियपञ्चिंदियतिरिक्खजोणिया' ॥ सम्प्रति स्थलचरप्रतिपादनार्थमाह—

से किं तं थलयरा?, २ दुविहा पण्णत्ता, तंजहा—चउप्पदा य परिसप्पा य। से किं तं चउप्पया?, २ चउव्विधा पण्णत्ता, तंजहा—एगक्खुरा सो चेव भेदो जाव जे यावन्ने तहप्पकारा ते समासतो दुविहा पण्णत्ता, तंजहा—पज्जत्ता य अपज्जत्ता य, चत्तारि सरीरा ओगाहणा जहन्नेणं अंगुलस्स असंखेज्ज० उक्कोसेणं छ गाउयाइं, ठिती उक्कोसेणं तिन्नि पलिओमाइं नवरं उव्वट्टित्ता नेरइएसु चउत्थपुढविं गच्छंति, सेसं जहा जलयराणं जाव चउगतिया चउआगतिया परित्ता असंखिज्जा पण्णत्ता, से तं चउप्पया। से किं तं परिसप्पा?, २ दुविहा पण्णत्ता, तंजहा—उरपरिसप्पा य भुयगपरिसप्पा य, से किं तं उरपरिसप्पा?, २ तहेव आसालियवज्जो भेदो भाणियव्वो, (तिण्णि) सरीरा, ओगाहणा जहण्णेणं अंगुलस्स असंखे० उक्कोसेणं जोयणसहस्सं, ठिती जहन्नेणं

१ प्रतिपत्तौ गर्भजलचराः सू० ३८

भापकवत्, मनोयोगरहितवाग्योगवानेव वाग्योगी द्वीन्द्रियादिः, जघन्यत एक समयमुत्कर्षतोऽन्तर्मुहूर्त्तं, एतदपि सूत्रं विशिष्टवाग्द्रव्यग्रहणापेक्षमवसातव्यं, काययोगी वाग्योगमनोयोगविकल एकेन्द्रियादिः, जघन्यतोऽन्तर्मुहूर्त्तं, द्वीन्द्रियादिभ्य उद्धृत्य पृथिव्यादिष्वन्तर्मुहूर्त्तं स्थित्वा भूयः कस्यापि द्वीन्द्रियादिषु गमनात्, उत्कर्षतः प्रागुक्तस्वरूपो वनस्पतिकालः, अयोगी सिद्धः, स च साद्यपर्यवसितः। अन्तरचिन्तायां मनोयोगिनोऽन्तरं जघन्येनान्तर्मुहूर्त्तं, तत ऊर्द्ध्वं भूयो विशिष्टमनोयोग्यपुद्गलग्रहणसम्भवात्, उत्कर्षतो वनस्पतिकालः, तावन्तं कालं स्थित्वा भूयो मनोयोगिष्वागमनसम्भवात्, एवं वाग्योगिनोऽपि जघन्यत उत्कर्षतश्चान्तरं भावनीयं, औदारिककाययोगिनो जघन्यत एक समयं, औदारिकलक्षणं कायमपेक्ष्यैतत्सूत्रं, यतो द्विसामायिक्यामपान्तरालगतावेकः 'समयोऽन्तरं, उत्कर्षतोऽन्तर्मुहूर्त्तं, इदं हि सूत्रं परिपूर्णौदारिकशरीरपर्याप्तिपरिसमाप्त्यपेक्षं, तत्र विग्रहसमयादारभ्य यावदौदारिकशरीरपर्याप्तिपरिसमाप्तिस्तावदन्तर्मुहूर्त्तं, तत उक्तमुत्कर्षतोऽन्तर्मुहूर्त्तं, न चैतत्स्वमनीषिकाविजृम्भितं, यत आह **चूर्णिकृत्**—'कायजोगिस्स जह० एक्कं समयं, कहं ?, एकसामायिकविग्रहगतस्स, उक्कोसं अंतरं अंतोमुहुत्तं, विग्रहसमयादारभ्य औदारिकशरीरपर्याप्तकस्य यावदेवमन्तर्मुहूर्त्तं द्रष्टव्य"मिति, सूत्राणि ह्यमूनि विचित्राभिप्रायतया दुर्लक्ष्याणीति सम्यक्संप्रदायादवसातव्यानि, सम्प्रदायश्च यथोक्तस्वरूप इति न काचिदनुपपत्तिः, न च सूत्राभिप्रायमज्ञात्वा अनुपपत्तिरुद्भावनीया, महाशातनायोगतो महाऽनर्थप्रसक्तेः, सूत्रकृतो हि भगवन्तो महीयांसः प्रमाणीकृताश्च महीयस्तरैस्तत्कालवर्त्तिभिरन्यैर्विद्वद्भिस्ततो न तत्सूत्रेषु मनागप्यनुपपत्तिः, केवलं सम्प्रदायावसाये यत्नो विधेयः, ये तु सूत्राभिप्रायमज्ञात्वा यथा कथञ्चिदनुपपत्तिमुद्भावयन्ते ते महतो महीयस आशातयन्तीति दीर्घतरसंसारभाजः, आह च **टीकाकारः**—"एवं विचित्राणि सूत्राणि सम्यक्संप्रदायादवसेयानीत्यविज्ञाय तदभिप्रायं नानुपपत्तिचोदना कार्या, महाशा-

तनायोगतो महाऽनर्थप्रसङ्गादिति" एवं च ये सम्प्रति दुष्पमानुभावतः प्रवचनस्योपप्लवाय धूमकेतव इवोत्थिताः सकलकालसुकराव्यवच्छिन्नसुविधिमार्गानुष्ठातृसुविहितसाधुपु मत्सरिणस्तेऽपि वृद्धपरम्परायातसम्प्रदायादवसेयं सूत्राभिप्रायमपास्योत्सूत्रं प्ररूपयन्तो महाशातनाभाजः प्रतिपत्तव्या अपकर्णयितव्याश्च दूरतस्तत्त्ववेदिभिरिति कृतं प्रसङ्गेन । सम्प्रत्यल्पबहुत्वमाह—'एएसि णं'मित्यादि प्रश्नसूत्रं सुगमं, भगवानाह—गौतम! सर्वस्तोका मनोयोगिनो, देवनारकगर्भजतिर्यक्पञ्चेन्द्रियमनुष्याणामेव मनोयोगित्वात्, तेभ्यो वाग्योगिनोऽसङ्ख्येयगुणाः, द्वित्रिचतुरसञ्ज्ञिपञ्चेन्द्रियाणां वाग्योगित्वात्, अयोगिनोऽनन्तगुणाः सिद्धानामनन्तत्वात्, तेभ्यः काययोगिनोऽनन्तगुणाः वनस्पतीना सिद्धेभ्योऽप्यनन्तत्वात् ॥

अहवा चउव्विहा सव्वजीवा पण्णत्ता, तंजहा—इत्थिवेयगा पुरिसवेयगा नपुंसगवेयगा अवेयगा, इत्थिवेयगा णं भंते! इत्थिवेदएत्ति कालतो केवचिरं होति?, गोयमा! (एगेण आएसेण०) पलियसयं दसुत्तरं अट्ठारस चोदस पलितपुहुत्तं, समओ जहण्णो, पुरिसवेदस्स जह० अंतो० उक्को० सागरोवमसयपुहत्तं सातिरेगं, नपुंसगवेदस्स जह० एक्कं समयं उक्को० अणंतं कालं वणस्सतिकालो । अवेयए दुविहे प०—सातीए वा अपज्जवसिते सातीए वा सपज्जवसिए से जह० एक्कं स० उक्को० अंतोमु० । इत्थिवेदस्स अंतरं जह० अंतो० उक्को० वणस्सतिकालो, पुरिसवेदस्स जह० एगं समयं उक्को० वणस्सइकालो, नपुंसगवेदस्स जह० अंतो० उक्को० सागरोव-

**मसयपुहुत्तं सातिरेगं, अवेदगो जहा हेट्ठा। अप्पाबहु० सव्वत्थोवा पुरिसवेदगा इत्थिवेदगा संखेज्जगुणा अवेदगा अणंतगुणा नपुंसगवेयगा अणंतगुणा ॥ (सू० २५८)**

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण चतुर्विधाः सर्वजीवाः प्रज्ञप्तास्तद्यथा—स्त्रीवेदकाः पुरुषवेदका नपुंसकवेदका अवेदकाः। 'एगेणं आएसेणं जह० एगं समय'मित्यादि पूर्वं त्रिविधप्रतिपत्तौ प्रपञ्चतो व्याख्यातमिति न भूयो व्याख्यायते, कायस्थितिचिन्तायां स्त्रीवेदकस्य पुरुषवेदस्य जघन्यतोऽन्तर्मुहूर्त्तं, स्त्रीवेदादिभ्य उद्धृत्य पुरुषवेदानामन्तर्मुहूर्त्तं जीवित्वा भूयः स्त्रीवेदादिषु कस्यापि गमनात्। अथ यथा स्त्रीवेदस्य नपुंसकस्य वा उपशमश्रेणावुपशमे जाते तदनन्तरमेकं समयं तं वेदमनुभूय मृतस्यैकसमयता व्यावर्ण्यते तथा पुरुषवेदस्यापि जघन्यत एकसमयता कस्मान्न भवति?, उच्यते, उपशमश्रेण्यन्तर्गतो मृतः सर्वोऽपि पुरुषवेदेषूत्पद्यते नान्यवेदेषु, तेन स्त्रीवेदस्य नपुंसकवेदस्य चोक्तप्रकारेण जघन्यत एकसमयता लभ्यते, न पुरुषवेदस्य, तस्य जन्मान्तरेऽपि सातत्येन गमनात्, ततो जघन्यं पुरुषवेदस्योपदर्शितेनैव प्रकारेणेत्यन्तर्मुहूर्त्तं, उत्कर्षतः सागरोपमशतपृथक्त्वं सातिरेकं, तच्च देवमनुष्यतिर्यग्भवभ्रमणेन परिभावनीयो मरणानन्तरं पुरुषवेदेषूत्पादात्, उत्कर्षतो वनस्पतिकालः, स च प्रागनेकधा दर्शितः, अवेदको द्विविधः—साद्यपर्यवसितः क्षीणवेदः सादिसपर्यवसित उपशान्तवेदः, स च जघन्यत एकं समयं, द्वितीये समये मरणतो देवगतौ पुरुषवेदसम्भवात्, उत्कर्षतोऽन्तर्मुहूर्त्तं, तदनन्तरं मरणतः पुरुषवेदसङ्क्रान्त्या प्रतिपाततो येन वेदेनोपशमश्रेणिं प्रतिपन्नस्तद्वेदोदयापत्त्या सवेदकत्वात्। अन्तरचिन्तायां स्त्रीवेदस्यान्तरं जघन्यतोऽन्तर्मुहूर्त्तं, तच्चोपशान्तवेदे पुनरन्तर्मुहूर्त्तेन स्त्रीवेदोदयापत्त्या, यदिवा स्त्रीभ्य उद्धृत्य पुरुषवेदेषु नपुं-

सकवेदेषु वाऽन्तर्मुहूर्त्तं जीवित्वा पुनः स्त्रीत्वेनोत्पत्त्या भावनीयं, उत्कर्षतो वनस्पतिकालः, पुरुषवेदस्यान्तरं जघन्येन एकं समयं, पुरु- पस्य स्ववेदोपशमसमयानन्तरं मरणे पुरुषेष्वेवोत्पादात्, उत्कर्षतो वनस्पतिकालः, नपुंसकवेदस्य जघन्येनाऽन्तर्मुहूर्त्तं, तत्र स्त्रीवेदोक्त- प्रकारेण भावयितव्यं, उत्कर्षतः सागरोपमशतपृथक्त्वं सातिरेकं, तत ऊर्ध्वं नियमतः संसारिणः सतो नपुंसकवेदोदयभावात्, अवे- दकस्य साद्यपर्यवसितस्य नास्त्यन्तरमपर्यवसितत्वात्, सादिसपर्यवसितस्य जघन्येनान्तर्मुहूर्त्तेन कस्यापि श्रेणिसमारम्भात्, उत्कर्षतोऽ- नन्तं कालं, अनन्ता उत्सर्पिण्यवसर्पिण्यः कालतः क्षेत्रतोऽपार्द्धं पुद्गलपरावर्त्तं देशोनं, तावतः कालादूर्ध्वं पुनरुपशमश्रेणिक्षपकश्रेणि- पुनः श्रेणिसमारम्भात् । अल्पबहुत्वचिन्तायां सर्वस्तोकाः पुरुषवेदकाः गतित्रयेऽप्यल्पत्वात्, स्त्रीवेदकाः सङ्ख्येयगुणाः, तिर्यग्गतौ त्रि- गुणत्वात् (मनुष्यगतौ सप्तविंशतिगुणत्वात्) देवगतौ द्वात्रिंशद्गुणत्वात्, अवेदका अनन्तगुणाः, सिद्धानामनन्तत्वात्, नपुंसकवेदका अनन्तगुणाः, वनस्पतीनां सिद्धेभ्योऽप्यनन्तगुणत्वात् ॥

अहवा चउव्विहा सव्वजीवा पण्णत्ता, तंजहा—चक्खुदंसणी अचक्खुदंसणी अवधिदंसणी केवलिदंसणी ॥ चक्खुदंसणी णं भंते!०?, जह० अंतो० उक्को० सागरोवमसहस्सं सातिरेगं, अचक्खुदंसणी दुविहे पण्णत्ते—अणातीए वा अपज्जवसिए अणाइए वा सपज्जवसिए। ओहिदंस- णिस्स जह० इक्कं समयं उक्को० दो छावट्ठी सागरोवमाणं साइरेगाओ, केवलदंसणी साइए अपज्जवसिए ॥ चक्खुदंसणिस्स अंतरं जह० अंतोमु० उक्को० वणस्सतिकालो। अचक्खुदंस- णिस्स दुविहस्स नत्थि अंतरं। ओहिदंसणस्स जह० अंतोमु० उक्कोसे० वणस्सइकालो। केवलदं-

**सण्णिस्स णत्थि अंतरं । अप्पाबहुयं सव्वत्थोवा ओहिदंसणी चक्खुदंसणी असंखेज्जगुणा केवलदंसणी अणंतगुणा अचक्खुदंसणी अणंतगुणा ॥ ( सू० २५९ ]**

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण चतुर्विधाः सर्वजीवाः प्रज्ञप्तास्तद्यथा—चक्षुर्दर्शनिनोऽचक्षुर्दर्शनिनोऽवधिदर्शनिनः केवलदर्शनिनः ॥ अमीषां कायस्थितिमाह—'**चक्खुदंसणी णं भंते!**' इत्यादि, चक्षुर्दर्शनी जघन्यतोऽन्तर्मुहूर्त्तं, अचक्षुर्दर्शनिभ्य उद्धृत्य चक्षुर्दर्शनिषूत्पद्य तावन्तं कालं स्थित्वा पुनरचक्षुर्दर्शनिषु कस्यापि गमनात्, उत्कर्षतः सागरोपमसहस्रं सातिरेकं, अचक्षुर्दर्शनी द्विविधः प्रज्ञप्तस्तद्यथा—अनाद्यपर्यवसितो यो न जातुचिदपि सिद्धिं गन्ता, अनादिसपर्यवसितो भव्यविशेषो यः सेत्स्यति, अवधिदर्शनी जघन्यत एकं समयं, अवधिप्रतिपत्त्यनन्तरमेव कस्यापि मरणतो मिथ्यात्वगमनतो दुष्टाध्यवसायभावतोऽवधिप्रतिपातात्, उत्कर्षतो द्वे षट्षष्टी सागरोपमाणां सातिरेके, तत्रैका षट्षष्टिः एवं—विभङ्गज्ञानी तिर्यक्पञ्चेन्द्रियो मनुष्यो वाऽधः सप्तम्यामुत्पन्नः, तत्र त्रयस्त्रिंशतं सागरोपमाणि स्थित्वा तत्र च प्रत्यासन्ने उद्वर्त्तनाकाले सम्यक्त्वं प्राप्य पुनः परित्यजति ततोऽप्रतिपतितेनैव विभङ्गेन पूर्वकोट्यायुष्केषु तिर्यक्षु जातस्ततः पुनरप्यप्रतिपतितविभङ्ग एवाधः सप्तम्यामुत्पन्न., तत्र च त्रयस्त्रिंशतं सागरोपमाणि स्थित्वा पुनरप्युद्वर्त्तनाकाले प्रत्यासन्ने सम्यक्त्वं प्राप्य पुनः परित्यजति, ततः पुनरप्यप्रतिपतितेनैव विभङ्गेन पूर्वकोट्यायुष्केषु तिर्यक्षूपजातो, वेलाद्वयमपि चाविग्रहेणाधः सप्तम्यास्तिर्यक्षूत्पादयितव्यः, विग्रहे विभङ्गस्य प्रतिषेधात्, उक्तं च—"विभंगनाणी पंचेदियतिरिक्खजोणिया मणूया य आहारगा नो अणाहारगा" इति, नन्वपान्तराले किमर्थं सम्यक्त्वं प्रतिपाद्यते ?, उच्यते, विभङ्गस्य स्तोककालावस्थायित्वात्, उक्तञ्च—"विभंगनाणी जह० एगं समयं उक्को० तेत्तीसं सागरोवमाइं देसूणाए पुव्वकोडीए अब्भहियाइं"ति, तदनन्तरमप्रतिपतितविभङ्ग एवं मनु-

ष्यत्वं प्राप्य सम्यक्त्वपूर्वं संयममासाद्य विजयादिषु वारद्वयमुत्पद्यमानस्य द्वितीया षट्षष्टिर्भावनीया, अवधिदर्शनं च विभङ्गेऽवधिज्ञाने च तुल्यमतो द्वे षट्षष्टी सागरोपमाणां सातिरेके स्थितिरवधिदर्शनिनः, केवलदर्शनी साद्यपर्यवसितः ॥ साम्प्रतमन्तरमाह—'चक्खुदंसणिस्स णं भंते!' इत्यादि, चक्षुर्दर्शनिनोऽन्तरं जघन्येनान्तर्मुहूर्त्तं तावत्प्रमाणेनाचक्षुर्दर्शनभवेन व्यवधानात्, उत्कर्षतो वनस्पतिकालः, स च प्रागुक्तस्वरूपः, अचक्षुर्दर्शनिनोऽनाद्यपर्यवसितस्य नास्त्यन्तरमपर्यवसितत्वात्, अनादिसपर्यवसितस्य नास्त्यन्तरं अचक्षुर्दर्शनित्वापगमे भूयोऽचक्षुर्दर्शनित्वायोगात्, क्षीणघातिकर्म्मणः प्रतिपातासम्भवात्, अवधिदर्शनिनो जघन्येनैकं समयमन्तरं, प्रतिपातसमयानन्तरसमय एव कस्यापि पुनस्तल्लाभभावात्, क्वचिदन्तर्मुहूर्त्तमिति पाठ., स च सुगमः तावता व्यवधानेन पुनस्तल्लाभभावात्, न चायं निर्मूलः पाठो, मूलटीकाकारेणापि मतान्तरेण समर्थितत्वात्, उत्कर्षतो वनस्पतिकालः, तावतः कालादूर्द्ध्वमवश्यमवधिदर्शनसम्भवात् अनादिमिथ्यादृष्टेरप्यविरोधात्, ज्ञानं हि सम्यक्त्वसचिवं न दर्शनमपीति भावना, केवलदर्शनिनः साद्यपर्यवसितस्य नास्त्यन्तरमपर्यवसितत्वात् । अल्पबहुत्वचिन्तायां सर्वस्तोका अवधिदर्शनिनो, देवनारककतिपयगर्भजतिर्यक्पञ्चेन्द्रियमनुष्याणामेव तद्भावात्, चक्षुर्दर्शनिनोऽसङ्ख्येयगुणाः, संमूर्च्छिमतिर्यक्पञ्चेन्द्रियचतुरिन्द्रियाणामपि तस्य भावात्, केवलदर्शनिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्योऽचक्षुर्दर्शनिनोऽनन्तगुणाः, एकेन्द्रियाणामप्यचक्षुर्दर्शनित्वात् ॥

**अहवा चउव्विहा सव्वजीवा पण्णत्ता, तंजहा—संजया असंजया संजयासंजया नोसंजयानोअसंजयानोसंजयासंजया। संजए णं भंते!०? जह० एक्कं समयं उक्को० देसूणा पुव्वकोडी, असंजया जहा अण्णाणी, संजयासंजते जह० अंतोमु० उक्को० देसूणा पुव्वकोडी, नोसंजतनो-**

**असंजयनोसंजयासंजए सातीए अपज्जवसिए, संजयस्स संजयासंजयस्स दोण्हवि अंतरं जह० अंतोमु० उक्को० अवड्ढं पोग्गलपरियट्टं देसूणं, असंजयस्स आदिदुवे णत्थि अंतरं, सातीयस्स सपज्जवसियस्स जह० एक्कं स० उक्को० देसूणा पुव्वकोडी, चउत्थगस्स णत्थि अंतरं ॥ अप्पाबहु० सव्वत्थोवा संजयासंजया संजया असंखेज्जगुणा णोसंजयणोअसंजयणोसंजयासंजया अणंतगुणा असंजया अणंतगुणा ॥ सेत्तं चउव्विहा सव्वजीवा पण्णत्ता ( सू० २६० )**

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण सर्वजीवाश्चतुर्विधाः प्रज्ञप्तास्तद्यथा—संयताः असंयताः संयतासंयताः नोसंयतानोअसंयतानोसंयतासंयताः ॥ कायस्थितिमाह—'संजए णं भंते !' इत्यादि, संयतो जघन्यत एकं समयं, सर्वविरतिपरिणामसमयानन्तरसमय एव कस्यापि मरणात्, उत्कर्षतो देशोना पूर्वकोटी, असंयतस्त्रिविधः—अनाद्यपर्यवसितः अनादिसपर्यवसितः सादिसपर्यवसितश्च, तत्रानाद्यपर्यवसितो यो न जातुचिदपि संयमं प्राप्स्यति, अनादिसपर्यवसितो य. संयमं लप्स्यति, लब्धेन च तेनैव संयमेन सिद्धिं गन्ता, सादिसपर्यवसितो सर्वविरतेर्देशविरतेर्वा परिभ्रष्टः, स हि सादिः नियमभाविसपर्यवसितत्वापेक्षया च सपर्यवसितः, स च जघन्येनान्तर्मुहूर्त्तं, तावता कालेन कस्यापि संयतत्वलाभात् 'तिण्हं सहस्स पुहुत्त'मित्यादि वचनात्, उत्कर्षतोऽनन्तं कालं, अनन्ता उत्सर्पिण्यवसर्पिण्यः कालतः, क्षेत्रतोऽपार्द्धं पुद्गलपरावर्त्तं देशोनं, संयतासंयतो जघन्येनान्तर्मुहूर्त्तं, संयतासंयतत्वप्रतिपत्तेः भङ्गबहुलतया जघन्यतोऽप्येतावन्मात्रकालप्रमाणत्वात्, उत्कर्षतो देशोना पूर्वकोटी, वालकाले तदभावात्, त्रितयप्रतिषेधवर्त्ती सिद्धः, स च साद्यपर्यवसित एव । अन्तरमाह—'संजयस्स णं'मित्यादि, संयतस्य जघन्येनान्तरमन्तर्मुहूर्त्तं, तावता कालेन पुनः कस्यापि सं-

यतत्वलाभात्, उत्कर्षतोऽनन्तं कालं, अनन्ता उत्सर्पिण्यवसर्पिण्य· कालतः क्षेत्रतोऽपार्द्धं पुद्गलपरावर्त्तं देशोनम्, एतावतः कालादूर्द्धं पूर्वमवाप्तसंयमस्य नियमतः संयमलाभात्, अनाद्यपर्यवसितस्यासंयतस्य नास्त्यन्तरमपर्यवसितत्वात्, अनादिसपर्यवसितस्यापि नास्त्यन्तरं, तस्य प्रतिपातासम्भवात्, सादिसपर्यवसितस्य जघन्यत एकं समयं, स चैकसमयः प्राग्व्यावर्णितः संयतसमयः, एवमुत्कर्षतो देशोना पूर्वकोटी, असंयतलव्यवधायकस्य संयतकालस्य संयतासंयतकालस्य वा उत्कर्षतोऽप्येतावत्प्रमाणत्वात्, संयतासंयतस्य जघन्यतोऽन्तर्मुहूर्त्तं, तद्भावपाते एतावता कालेन तल्लाभसिद्धेः, उत्कर्षतः संयतवत्, त्रितयप्रतिषेधवर्त्तिनः सिद्धस्य साद्यपर्यवसितस्य नास्त्यन्तरं अपर्यवसिततया सदा तद्भावापरित्यागात् ॥ अल्पबहुत्वमाह—'एएसि ण'मित्यादि, सर्वस्तोका जीवा. संयताः, सङ्ख्येयकोटीकोटीप्रमाणत्वात्, संयतासंयता असङ्ख्येयगुणाः, असङ्ख्येयानां तिरश्चां देशविरतिभावात्, त्रितयप्रतिषेधवर्त्तिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्योऽसंयता अनन्तगुणाः वनस्पतीनां सिद्धेभ्योऽप्यनन्तत्वात् । उपसंहारमाह—'सेत्त'मित्यादि ॥ उक्ताश्चतुर्विधाः सर्वजीवाः, सम्प्रति पञ्चविधानाह—

**तत्थ जे ते एवमाहंसु पंचविधा सव्वजीवा पण्णत्ता ते एवमाहंसु, तंजहा—कोहकसायी माणकसायी मायाकसायी लोभकसायी अकसायी ॥ कोहकसाई माणकसाई मायाकसाई णं जह० अंतो० उक्को० अंतोमु०, लोभकसाइस्स जह० एकं स० उक्को० अंतो०, अकसाई दुविहे जहा हेट्ठा ॥ कोहकसाई माणकसाईमायाकसाईणं अंतरं जह० एकं० स० उक्को० अंतो० लोहकसाइस्स अंतरं जह० अंतो० उक्को० अंतो०, अकसाई तहा जहा हेट्ठा ॥ अप्पाबहु—अकसाइणो**

२ प्रतिपत्तौ सर्वजीव चातुर्विध्ये चक्षुर्दर्शनादि उद्देशः २ सू० २११

**सव्वत्थोवा माणकसाई तहा अणंतगुणा। कोहे माया लोभे विसेसमहिया मुणेतव्वा ॥ १ ॥**
**(सू० २४१)**

'तत्थ जे ते' इत्यादि, तत्र ये ते एवमुक्तवन्तः पञ्चविधाः सर्वजीवाः प्रज्ञप्तास्ते एवमुक्तवन्तस्तद्यथा—क्रोधकषायिणो मानकषायिणो मायाकषायिणो लोभकषायिणोऽकषायिणश्च ॥ अमीषां कायस्थितिमाह—'कोहकसाई णं भंते' इत्यादि, क्रोधकषायी जघन्येनाप्यन्तर्मुहूर्त्तं, "क्रोधाद्युपयोगकालोऽन्तर्मुहूर्त्त"मिति वचनात्, एवं मानकषायी मायाकषायी च वक्तव्यः, लोभकषायी जघन्येनैकं समयं, स चोपशमश्रेणेः प्रतिपतन् लोभकषायोदयप्रथमसमयानन्तरं मृतः प्रतिपत्तव्यो, मरणसमये कस्यापि क्रोधाद्युदयसम्भवात्, क्रमेण प्रतिपतनं हि मरणाभावे न तु मरणेऽपीति, उत्कर्षतोऽन्तर्मुहूर्त्तं, अकषायी द्विविधः—साद्यपर्यवसितः केवली, सादिसपर्यवसित उपशान्तकषायः, स च जघन्येनैकं समयं द्वितीये समये मरणतः क्रोधाद्युदयेन सकषायत्वप्राप्तेः, उत्कर्षतोऽन्तर्मुहूर्त्तमुपशान्तमोहगुणस्थानककालस्यैतावत्प्रमाणत्वादित्येके, अन्ये त्वभिदधति—जघन्यतोऽप्यन्तर्मुहूर्त्तं, न लोभोपशमप्रवृत्तस्यान्तेऽन्तर्मुहूर्त्तादधो मरणमिति वृद्धवादात्, उत्कर्षतोऽप्यन्तर्मुहूर्त्तमुपशान्तमोहगुणस्थानककालस्योत्कर्षतोऽप्येतावन्मात्रत्वात्, नवरं जघन्यपदादुत्कृष्टपदं विशेषाधिकमवसातव्यं, युक्तं चैतत् सूत्रकृतोऽभिप्रायेण प्रतिभासते, लोभकषायिणो जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तान्तराभिधानात्, वक्ष्यति च—"लोभकसाइयस्स जह० अंतो० उक्कोसेणवि अंतोमुहुत्तमंतर"मिति ॥ साम्प्रतमन्तरमाह—'कोहकसाइस्स णं भंते!' इत्यादि, क्रोधकषायिणोऽन्तरं जघन्येनैकं समयं, तदुपशमसमयानन्तरं मरणे भूयः कस्यापि तदुदयात्, उत्कर्षतोऽन्तर्मुहूर्त्तं, एवं मानकषायिमायाकषायिसूत्रे अपि वक्तव्ये, लोभकषायिणो जघन्येनोत्कृष्टेनाप्यन्तर्मुहूर्त्तं नवरमुत्कृष्टं बृहत्तरमवसातव्यम्, अकषा-

यिणः साद्यपर्यवसितस्य नास्त्यन्तरं अपर्यवसितत्वात्, सादिसपर्यवसितस्य जघन्येनान्तर्मुहूर्त्तं, तावता कालेन भूयः श्रेणिलाभात्, उत्कर्षतोऽनन्तं कालं, अनन्ता उत्सर्पिण्यवसर्पिण्यः कालतः, क्षेत्रतोऽपार्द्धं पुद्गलपरावर्त्तं देशोनं, पूर्वमनुभूताकषायित्वस्यैतावता कालेन भूयो नियमेनाकषायित्वभावात् ॥ अल्पबहुत्वचिन्तायां सर्वस्तोका अकषायिणः, सिद्धानामेवाकषायित्वात्, तेभ्यो मानकषायिणोऽनन्तगुणाः, निगोदजीवानां सिद्धेभ्योऽप्यनन्तगुणत्वात्, तेभ्यः क्रोधकषायिणो विशेषाधिकाः, क्रोधकषायोदयस्य चिरकालावस्थायित्वात्, एवं तेभ्यो मायाकषायिणो विशेषाधिकाः, तेभ्यो लोभकषायिणो विशेषाधिकाः, मायालोभोदययोश्चिरतरकालावस्थायित्वात् ॥

**अहवा पंचविहा सव्वजीवा पण्णत्ता, तंजहा—णेरइया तिरिक्खजोणिया मणुस्सा देवा सिद्धा। संचिट्ठणांतराणि जह हेट्ठा भणियाणि। अप्पाबहु० थोवा मणुस्सा णेरइया असंखेज्जगुणा देवा असंखेज्जगुणा सिद्धा अणंतगुणा तिरिया अणंतगुणा। सेत्तं पंचविहा सव्वजीवा पण्णत्ता ॥ (सू० २६२)**

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण पञ्चविधाः सर्वजीवाः प्रज्ञप्तास्तद्यथा—नैरयिकास्तिर्यञ्चो मनुष्या देवाः सिद्धाः, अमीषां कायस्थितिरन्तरमल्पबहुत्वं च प्रागेवाभिहितमिति न भूयो भाव्यते। उपसंहारमाह—'सेत्तं पंचविहा सव्वजीवा पन्नत्ता' ॥ तदेवमुक्ताः पञ्चविधाः सर्वजीवाः, सम्प्रति षड्विधानाह—

अंतोमुहुत्तं उक्कोसेणं पुव्वकोडी उव्वट्टित्ता नेरइएसु जाव पंचमं पुढविं ताव गच्छंति, तिरिक्खमणुस्सेसु सव्वेसु, देवेसु जाव सहस्सारा, सेसं जहा जलयराणं जाव चउगतिया चउआगइया परित्ता असंखेज्जा से तं उरपरिसप्पा। से किं तं भुयगपरिसप्पा?, २ भेदो तहेव, चत्तारि सरीरगा ओगाहणा जहन्नेणं अंगुलासंखे० उक्कोसेणं गाउयपुहुत्तं ठिती जहन्नेणं अंतोमुहुत्तं उक्कोसेणं पुव्वकोडी, सेसेसु ठाणेसु जहा उरपरिसप्पा, णवरं दोच्चं पुढविं गच्छंति, से तं भुयपरिसप्पा पण्णत्ता, से तं थलयरा ॥ (सू० ३९)। से किं तं खहयरा?, २ चउव्विहा पण्णत्ता, तंजहा—चम्मपक्खी तहेव भेदो, ओगाहणा जहन्नेणं अंगुलस्स असंखे० उक्कोसेणं धणुपुहुत्तं, ठिती जहन्नेणं अंतोमुहुत्तं उक्कोसेणं पलिओवमस्स असंखेज्जतिभागो, सेसं जहा जलयराणं, नवरं जाव तच्चं पुढविं गच्छंति जाव से तं खहयरगब्भवक्कंतियपंचेंदियतिरिक्खजोणिया, से तं तिरिक्खजोणिया ॥ (सू० ४०)

स्थलचरगर्भव्युत्क्रान्तिकानां भेदोपदर्शकं सूत्रं यथा संमूर्च्छिमस्थलचराणां, नवरमत्रासालिका न वक्तव्या, सा हि संमूर्च्छिमैव न गर्भव्युत्क्रान्तिका, तथा महोरगसूत्रे "जोयणसयंपि जोयणसयपुहुत्तियावि जोयणसहस्संपि" इत्येतदधिकं वक्तव्यं, शरीरादिद्वारकदम्बकसूत्रं तु सर्वत्रापि गर्भव्युत्क्रान्तिकजलचराणामिव, नवरमवगाहनास्थित्युद्वर्त्तनासु नानात्वं, तत्र चतुष्पदानामुत्कृष्टाऽवगाहना षड् गव्यूतानि, स्थितिरुत्कर्षतस्त्रीणि पल्योपमानि, उद्वर्त्तना चतुर्थपृथिव्या आरभ्य यावत्सहस्रारः, एतेषु सर्वेष्वपि जीवस्थानेष्वनन्तरमुद्वृत्त्योत्पद्यन्ते, उरःपरिसर्पाणामुत्कृष्टावगाहना योजनसहस्रं, स्थितिरुत्कर्षतः पूर्वकोटी, उद्वर्त्तना पञ्चमपृथिव्या आरभ्य यावत्सह-

तत्थ जे ते एवमाहंसु छव्विहा सव्वजीवा पण्णत्ता ते एवमाहंसु, तंजहा—आभिणिबोहियणाणी सुयणाणी ओहिनाणी मणपज्जवणाणी केवलनाणी अण्णाणी, आभिणिबोहियणाणी णं भंते? आभिणिबोहियणाणित्ति कालओ केवचिरं होइ?, गोयमा! जह० अन्तोमुहुत्तं उक्को० छावट्ठिं सागरोवमाइं साइरेगाइं एवं सुयणाणीवि, ओहिणाणी णं भंते!० ?, जह० एक्कं समयं उक्को० छावट्ठिं सागरोवमाइं साइरेगाइं, मणपज्जवणाणी णं भंते!० ?, जह० एक्कं समयं उक्को० देसूणा पुव्वकोडी, केवलनाणी णं भंते!० ? सादीए अपज्जवसिए, अन्नाणिणो तिविहा पं० तं०—अणाइए वा अपज्जवसिए अणाइए वा सपज्जवसिए साइए वा सपज्जवसिए, तत्थ साइए सपज्जवसिए जह० अंतो० उक्को० अणंतं कालं अवड्ढं पुग्गलपरियट्टं देसूणं। अंतरं आभिणिबोहियणाणिस्स जह० अंतो० उक्को० अणंतं कालं अवड्ढं पुग्गलपरियट्टं देसूणं, एवं सुय० अंतरं० मणपज्जव०, केवलनाणिणो णत्थि अंतरं, अन्नाणि० साइसपज्जवसियस्स जह० अंतो० उक्को० छावट्ठिं सागरोवमाइं साइरेगाइं। अप्पा० सव्वत्थोवा मण० ओहि० असंखे० आभि० सुय० विसेसा० सट्ठाणे दोवि तुल्ला केव० अणंत० अण्णाणी अणंतगुणा॥ अहवा छव्विहा सव्वजीवा पण्णत्ता तंजहा—(एवंविधः पाठ इतः प्राग् आवश्यको न चोपलब्धो दृश्यमानादर्शेषु क्वचिदपि) एगिंदिया बेंदिया तेंदिया चउरिंदिया पंचेंदिया अणिंदिया। संचिट्ठणांतरा जहा हेट्ठा। अप्पाबहु—

**सव्वत्थोवा पंचेंदिया चउरिंदिया विसेसा० तेइंदिया विसेसा० बेंदिया विसेसा० एगिंदिया अणंतगुणा अणिंदिया अणंतगुणा ॥ ( सू० २६३ )**

'तत्थे'त्यादि, तत्र ये ते एवमुक्तवन्तः षड्विधाः सर्वजीवाः प्रज्ञप्तास्ते एवमुक्तवन्तस्तद्यथा—आभिनिवोधिकज्ञानिनः श्रुतज्ञानिनोऽवधिज्ञानिनो मनःपर्यवज्ञानिनः केवलज्ञानिनोऽज्ञानिनश्च । सम्प्रत्यमीषां कायस्थितिमाह—'आभिणिवोहियनाणी णं भंते !' इत्यादि, आभिनिवोधिकज्ञानी जघन्येनान्तर्मुहूर्त्तं, सम्यक्त्वकालस्य जघन्यत एतावन्मात्रत्वात्, उत्कर्षतः षट्षष्टिः सागरोपमाणि सातिरेकाणि, तानि च विजयादिषु वारद्वयादिगमनेन भावनीयानि, एवं श्रुतज्ञानिनोऽपि वक्तव्यं, आभिनिवोधिकश्रुतज्ञानयोः परस्पराविनाभूतत्वात्, 'जत्थ आभिणिवोहियणाणं तत्थ सुयनाणं, जत्थ सुयनाणं तत्थ आभिणिवोहियनाणं, दोवि एयाइं अण्णोण्णमणुगयाइं' इति वचनात्, अवधिज्ञानी जघन्यत एकं समयं, सा चैकसमयता मरणतः प्रतिपातेन मिथ्यात्वगमनतो वा विभङ्गज्ञानभावतः प्रतिपत्तव्या, उत्कर्षतः षट्षष्टिः सागरोपमाणि सातिरेकाणि, तान्याभिनिवोधिकज्ञानवद्भावनीयानि, मनःपर्यवज्ञानी जघन्यत एकं समयं, द्वितीय समये मरणतः प्रतिपातात्, उत्कर्षतो देशोना पूर्वकोटी, चारित्रकालस्योत्कर्षतोऽप्येतावन्मात्रत्वात्, केवलज्ञानी साद्यपर्यवसितः । अज्ञानी त्रिविधः प्रज्ञप्तस्तद्यथा—अनाद्यपर्यवसितः अनादिसपर्यवसितः सादिसपर्यवसितश्च, तत्र योऽसौ सादिसपर्यवसितोऽसौ जघन्येनान्तर्मुहूर्त्तं, तत ऊर्द्धं कस्यापि सम्यक्त्वलाभतो भूयोऽपि ज्ञानित्वभावात्, उत्कर्षतोऽनन्तं कालं यावदपार्द्धं देशोनं पुद्गलपरावर्त्तं, ज्ञानित्वात्परिभ्रष्टस्यैतावता कालेन नियमतो भूयोऽपि ज्ञानित्वभावात् । अन्तरचिन्तायामाभिनिवोधिकज्ञानिनो जघन्येनान्तरमन्तर्मुहूर्त्तं, कस्याप्येतावत्कालेन भूयोऽप्याभिनिवोधिकज्ञानित्वभावात्, उत्कर्षतोऽनन्तं कालं यावदपार्द्धं पुद्गल-

परावर्त्तं देशोनं, एवं श्रुतज्ञानिनोऽवधिज्ञानिनो मनःपर्यवज्ञानिनश्चान्तरं वक्तव्यं, केवलज्ञानिनः साद्यपर्यवसितत्वान्नास्त्यन्तरं, अज्ञानिनोऽनाद्यपर्यवसितस्य नास्त्यन्तरं अपर्यवसितत्वात्, अनादिसपर्यवसितस्यापि नास्त्यन्तरं भूयस्तद्भावायोगात्, पुनरज्ञानित्वं हि भवत् सादिसपर्यवसितं भवति न त्वनादिसपर्यवसितं, सादिसपर्यवसितस्य जघन्यतोऽन्तर्मुहूर्त्तं, तावता कालेन भूयोऽपि कस्याप्यज्ञानित्वप्राप्तेः, उत्कर्षतः षट्षष्टिः सागरोपमाणि सातिरेकाणि । अल्पबहुत्वचिन्तायां सर्वस्तोका मनःपर्यवज्ञानिनश्चारित्रिणामेव केषाञ्चित्तद्भावात् 'त संजयस्स सव्वप्पमायरहियस्स विविधरिद्धिमतो' इति वचनात्, तेभ्योऽवधिज्ञानिनोऽसङ्ख्यातगुणाः, देवनारकाणामप्यवधिज्ञानभावात्, तेभ्य आभिनिवोधिकज्ञानिनः श्रुतज्ञानिनश्च द्वयेऽपि विशेषाधिकाः, स्वस्थाने तु द्वयेऽपि परस्परं तुल्याः, आभिनिवोधिकश्रुतज्ञानयोः परस्पराविनाभावात्, तेभ्यः केवलज्ञानिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्योऽज्ञानिनोऽनन्तगुणाः, वनस्पतिकायानां सिद्धेभ्योऽप्यनन्तत्वात् ॥ 'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण षड्विधाः सर्वजीवाः प्रज्ञप्तास्तद्यथा—एकेन्द्रिया द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रिया. पञ्चेन्द्रिया अनिन्द्रियाः । एतेषां कायस्थितिरन्तरमल्पबहुत्वं प्रागेव भावितम् ॥

**अहवा छव्विहा सव्वजीवा पण्णत्ता तंजहा—ओरालियसरीरी वेउव्वियसरीरी आहारगसरीरी तेयगसरीरी कम्मगसरीरी असरीरी ॥ ओरालियसरीरी णं भंते! कालओ केवचिरं होइ?, जहण्णेणं खुड्डागं भवगहणं दुसमऊणं, उक्कोसेणं असंखिज्जं कालं जाव अंगुलस्स असंखेज्जतिभागं, वेउव्वियसरीरी जह० एक्कं समयं उक्कोसेणं तेत्तीसं सागरोवमाइं अंतोमुहुत्तमब्भहियाइं, आहारगसरीरी जह० अंतो० उक्को० अंतो०, तेयगसरीरी दुविहे—अणादीए वा अपज्जवसिए अणादीए**

**वा सपज्जवसिते, एवं कम्मगसरीरीवि, असरीरी सातीए अपज्जवसिते ॥ अंतरं ओरालियसरीरस्स जह० एक्कं समयं उक्को० तेत्तीसं सागरोवमाइं अंतोमुहुत्तमब्भहियाइं, वेउव्वियसरीरस्स जह० अंतो० उक्को० अणंतं कालं वणस्सतिकालो, आहारगस्स सरीरस्स जह० अंतो० उक्को० अणंतं कालं जाव अवड्ढं पोग्गलपरियट्टं देसूणं, तेय० कम्मसरीरस्स य दुण्हवि णत्थि अंतरं ॥ अप्पाबहु० सव्वत्थोवा आहारगसरीरी वेउव्वियसरीरी असंखेज्जगुणा ओरालियसरीरी असंखेज्जगुणा असरीरी अणंतगुणा तेयाकम्मसरीरी दोवि तुल्ला अणंतगुणा ॥ सेत्तं छव्विहा सव्वजीवा पण्णत्ता ॥ ( सू० २६४ )**

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण षड्विधाः सर्वजीवा. प्रज्ञप्तास्तद्यथा—औदारिकशरीरिणः वैक्रियशरीरिणः आहारकशरीरिणः तैजसशरीरिण. कार्मणशरीरिणः अशरीरिणश्च ॥ अमीषा कायस्थितिमाह—'ओरालियसरीरी णं भंते' इत्यादि, औदारिकशरीरी जघन्यतः क्षुल्लकभवग्रहणं द्विसमयोनं, विग्रहे आद्ययोर्द्वयोः समययो. कार्मणशरीरित्वात्, उत्कर्षतोऽसङ्ख्येयं कालं तावन्तं कालमविग्रहेणोत्पादसम्भवात् । वैक्रियशरीरी जघन्येनैकं समयं, विकुर्वणासमयानन्तरसमये एव कस्यापि मरणसम्भवात्, उत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणि अन्तर्मुहूर्त्ताभ्यधिकानि, तानि चैवं—कश्चिच्चारित्रवान् वैक्रियशरीरं कृत्वाऽन्तर्मुहूर्त्तं जीवित्वा स्थितिक्षयादविग्रहेणानुत्तरसुरेषूपजायते, आहारकशरीरी जघन्येनाप्यन्तर्मुहूर्त्तमुत्कर्षतोऽप्यन्तर्मुहूर्त्तं, तैजसशरीरी कार्मणशरीरी च प्रत्येक द्विविध.—अनाद्यपर्यवसितो यो न मुक्तिं गन्ता, अनादिसपर्यवसितो मुक्तिगामी, अशरीरी साद्यपर्यवसित. । अन्तरचिन्तायामौदारिकशरीरिणोऽ-

न्तरं जघन्यत एकः समयः, स च द्विसामयिक्यामपान्तरालगतौ भावनीयः, प्रथमे समये कार्मणशरीरोपेतत्वात्, उत्कर्षतस्त्रय-
स्त्रिंशत्सागरोपमाणि अन्तर्मुहूर्त्ताभ्यधिकानि, उत्कृष्टो वैक्रियकाल इति भावः, वैक्रियशरीरिणोऽन्तरं जघन्यतोऽन्तर्मुहूर्त्तं, सकृद्वैक्रिय-
करणे एतावता कालेन पुनर्वैक्रियकरणात् मानवदेवेषु भावात्, उत्कर्षतो वनस्पतिकालः प्रकट एव, आहारकशरीरिणो जघन्येनान्त-
र्मुहूर्त्तं, सकृत्करणे एतावता कालेन पुनः करणात्, उत्कर्षतोऽनन्तं कालं यावदपार्द्धं पुद्गलपरावर्त्तं, तैजसकार्म्मणशरीरयोर्द्विधाऽपि
नास्त्यन्तरं । अल्पबहुत्वचिन्तायां सर्वस्तोका आहारकशरीरिणः, उत्कर्षतोऽपि सहस्रपृथक्त्वेन प्राप्यमाणत्वात्, तेभ्यो वैक्रियशरीरि-
णोऽसङ्ख्येयगुणाः, देवनारकाणां कतिपयगर्भजतिर्यक्पञ्चेन्द्रियमनुष्यवायुकायिकानां च वैक्रियशरीरित्वात्, तेभ्य औदारिकशरीरिणो-
ऽसङ्ख्येयगुणाः, इहानन्तानामपि जीवाना यस्मादेकमौदारिकं शरीरं ततः स एक औदारिकशरीरी परिगृह्यते ततोऽसङ्ख्येयगुणा एवौ-
दारिकशरीरिणो नानन्तगुणाः, आह च **मूलटीकाकारः**—"औदारिकशरीरिभ्योऽशरीरा अनन्तगुणाः, सिद्धानामनन्तत्वात्, औ-
दारिकशरीरिणां च शरीरापेक्षयाऽसङ्ख्येयत्वा"दिति, तेभ्योऽशरीरिणोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्यस्तैजसशरीरिणः कार्म-
णशरीरिणश्चानन्तगुणाः, स्वस्थाने तु द्वयेऽपि परस्पर तुल्याः, तैजसकार्मणयोः परस्पराविनाभावात्, इह तैजसशरीरं कार्मणशरीरं
च निगोदेष्वपि प्रतिजीवं विद्यत इति सिद्धेभ्योऽप्यनन्तगुणत्वम् । उपसंहारमाह—**'सेत्तं छव्विहा सव्वजीवा पन्नत्ता'** ॥ उक्ताः
षड्विधाः सर्वजीवाः, सम्प्रति सप्तविधानाह—

**तत्थ जे ते एवमाहंसु सत्तविधा सव्वजीवा पं० ते एवमाहंसु, तंजहा—पुढविकाइया आउकाइया तेउकाइया वाउकाइया वणस्सतिकाइया तसकाइया अकाइया । संचिट्ठणंतरा जहा हेट्ठा ।**

अप्पाबहु० सव्वत्थोवा तसकाइया तेउकाइया असंखेज्जगुणा पुढविकाइया विसे० आउ० विसे० वाउ० विसेसा० सिद्धा अणंतगुणा वणस्सइकाइया अणंतगुणा ॥ (सू० २६५)

'तत्थ जे ते' इत्यादि, तत्र ये ते एवमुक्तवन्तः सप्तविधाः सर्वजीवाः प्रज्ञप्तास्ते एवमुक्तवन्तस्तद्यथा—पृथिवीकायिका अप्कायिकाः तेजस्कायिका वायुकायिका वनस्पतिकायिकाः त्रसकायिकाः अकायिकाश्च । पृथिवीकायिकादीनां कायस्थितिरन्तरमल्पबहुत्वं च प्रागेव भावितमिति न भूयो भाव्यते ॥

अहवा सत्तविहा सव्वजीवा पण्णत्ता, तंजहा—कण्हलेस्सा नीललेस्सा काउलेस्सा तेउलेस्सा पम्हलेस्सा सुक्कलेस्सा अलेस्सा॥ कण्हलेसे णं भंते! कण्हलेसत्ति कालओ केवचिरं होइ, गोयमा! ज० अंतो० उक्को० तेत्तीसं सागरोवमाइं अंतोमुहुत्तमब्भहियाइं, णीललेस्से णं जह० अंतो० उक्क० दस सागरोवमाइं पलिओवमस्स असंखेज्जतिभागअब्भहियाइं, काउलेस्से णं भंते!०, जह० अंतो० उक्क० तिन्नि सागरोवमाइं पलिओवमस्स असंखेज्जतिभागमब्भहियाइं, तेउलेस्से णं भंते!, जह० अं० उक्क० दोण्णि सागरोवमाइं पलिओवमस्स असंखेज्जइभागमब्भहियाइं, पम्हलेसे णं भंते!, जह० अंतो० उक्क० दस सागरोवमाइं अंतोमुहुत्तमब्भहियाइं, सुक्कलेसे णं भंते!०?, जहन्नेणं अंतो० उक्कोसेणं तित्तीसं सागरोवमाइं अंतोमुहुत्तमब्भहियाइं, अलेस्से णं भंते! सादीए अपज्जवसिते ॥ कण्हलेसस्स णं भंते! अंतरं कालओ केवचिरं होति?, जह० अंतो० उक्को० ते-

**त्तीसं सागरोवमाइं अंतोमुहुत्तम०, एवं नीललेसस्सवि, काउलेसस्सवि, तेउलेसस्स णं भंते! अंतरं का०?, जह० अंतो० उक्को० वणस्सतिकालो, एवं पम्हलेसस्सवि सुक्कलेसस्सवि दोण्हवि एवमंतरं, अलेसस्स णं भंते! अंतरं कालओ०?, गोयमा! सादीयस्स अपज्जवसियस्स णत्थि अंतरं ॥ एतेसि णं भंते! जीवाणं कण्हलेसाणं नीललेसाणं काउले० तेउ० पम्ह० सुक्क० अलेसाण य कयरे २?०, गोयमा! सव्वत्थोवा सुक्कलेस्सा पम्हलेस्सा संखेज्जगुणा तेउलेस्सा संखिज्जगुणा अलेस्सा अणंतगुणा काउलेस्सा अणंतगुणा नीललेस्सा विसेसाहिया कण्हलेस्सा विसेसाहिया। सेत्तं सत्तविहा सव्वजीवा पन्नत्ता ॥ ( सू० २६६ )**

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण सर्वजीवाः सप्तविधाः प्रज्ञप्तास्तद्यथा—कृष्णलेश्याः नीललेश्याः कापोतलेश्याः तेजोलेश्याः पद्मलेश्याः शुक्ललेश्याः अलेश्याः ॥ साम्प्रतमेतेषां कायस्थितिमाह—'कण्हलेसे णं भंते!' इत्यादि, कृष्णलेश्या जघन्यतोऽन्तर्मुहूर्त्तं, तिर्यङ्मनुष्याणां कृष्णलेश्याया अन्तर्मुहूर्त्तावस्थायित्वात्, उत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणि अन्तर्मुहूर्त्ताभ्यधिकानि, देवनारका हि पाश्चात्यभवगतचरमान्तर्मुहूर्त्तादारभ्याग्रेतनभवगतप्रथमान्तर्मुहूर्त्तं यावदवस्थितलेश्याकाः, अधःसप्तमपृथिवीनारकाश्च कृष्णलेश्याकाः पाश्चात्याग्रेतनभवगतचरमादिमान्तर्मुहूर्त्ते द्वे अप्येकमन्तर्मुहूर्त्तं, तस्यासङ्ख्यातभेदात्मकत्वात्, तत उपपद्यन्ते कृष्णलेश्याकस्यान्तर्मुहूर्त्ताभ्यधिकानि त्रयस्त्रिंशत्सागरोपमाणि, नीललेश्याको जघन्यतोऽन्तर्मुहूर्त्तं तच प्राग्वत्, उत्कर्षतो दश सागरोपमाणि पल्योपमासङ्ख्येयभागाधिकानि, धूमप्रभाप्रथमप्रस्तटनारकाणां नीललेश्याकानामेतावत्स्थितिकत्वात्, पाश्चात्याग्रेतनभवगते च चरमादिमान्तर्मुहूर्त्ते पल्यो-

पमासङ्ख्येयभागान्तःप्रविष्टे न पृथग्विवक्षिते, कापोतलेश्याको जघन्येनान्तर्मुहूर्त्तं प्राग्वत्, उत्कर्षतस्त्रीणि सागरोपमाणि पल्योपमासङ्ख्येयभागाभ्यधिकानि, वालुकाप्रथमप्रस्तटगतनारकाणां कापोतलेश्याकानामेतावत्स्थितिकत्वात्, तेजोलेश्याको जघन्येनान्तर्मुहूर्त्तं तथैव उत्कर्षतो द्वे सागरोपमे पल्योपमासङ्ख्येयभागाभ्यधिके, ते चेशानदेवानामवसातव्ये, पद्मलेश्याको जघन्येनान्तर्मुहूर्त्तं प्राग्वत्, उत्कर्षतो दश सागरोपमाणि अन्तर्मुहूर्त्ताभ्यधिकानि, तानि ब्रह्मलोकवासिनां देवानामवसातव्यानि, शुक्ललेश्याको जघन्यतोऽन्तर्मुहूर्त्तं प्राग्वत्, उत्कर्षतस्त्रयस्त्रिंशत् सागरोपमाणि अन्तर्मुहूर्त्ताभ्यधिकानि, तानि चानुत्तरसुराणा प्रतिपत्तव्यानि, तेपा शुक्ललेश्याकत्वात् ॥ अन्तरचिन्ताया कृष्णलेश्याकस्यान्तरं जघन्यतोऽन्तर्मुहूर्त्तं, तिर्यङ्मनुष्याणामन्तर्मुहूर्त्तेन लेश्यापरावर्त्तनात्, उत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाण्यन्तर्मुहूर्त्ताभ्यधिकानि, शुक्ललेश्योत्कृष्टकालस्य कृष्णलेश्यान्तरोत्कृष्टकालत्वात्, एवं नीललेश्याकापोतलेश्ययोरपि जघन्यत उत्कर्षतश्चान्तरं वक्तव्यं, तेजःपद्मशुक्लानामन्तरं जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतो वनस्पतिकालः, स च प्रतीत एवेति, अलेश्यस्य साद्यपर्यवसितस्य नास्त्यन्तरमपर्यवसितत्वात् ॥ अल्पबहुत्वचिन्तायां सर्वस्तोका. शुक्ललेश्याः, लान्तकादिदेवानां पर्याप्तगर्भव्युत्क्रान्तिककतिपयपञ्चेन्द्रियतिर्यङ्मनुष्याणां शुक्ललेश्यासम्भवात्, तेभ्यः पद्मलेश्याः सङ्ख्येयगुणाः, सनत्कुमारमाहेन्द्रब्रह्मलोककल्पवासिना सर्वेपा प्रभूतपर्याप्तगर्भव्युत्क्रान्तिकतिर्यङ्मनुष्याणा च पद्मलेश्याकत्वात्, अथ लान्तकादिदेवेभ्यः सनत्कुमारादिकल्पत्रयवासिनो देवा असङ्ख्यातगुणाः ततः शुक्ललेश्येभ्यः पद्मलेश्या असङ्ख्यातगुणाः प्राप्नुवन्ति, कथं सङ्ख्येयगुणा उक्ता.?, उच्यते, इह जघन्यपदेऽप्यसङ्ख्यातानां सनत्कुमारादिकल्पत्रयवासिभ्योऽसङ्ख्येयगुणाना पञ्चेन्द्रियतिरश्चा शुक्ललेश्या, तत. पद्मलेश्याकाः शुक्ललेश्याकेभ्यः सङ्ख्येयगुणाः, तेजोलेश्याका. तेभ्योऽपि सङ्ख्येयगुणाः, तेभ्योऽपि सङ्ख्येयगुणेपु तिर्यक्पञ्चेन्द्रियमनुष्येपु भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवेपु च

तेजोलेश्याभावात्, भावना सङ्ख्येयगुणत्वे प्राग्वत्, तेभ्योऽप्यनन्तगुणा अलेश्याः, सिद्धानामनन्तत्वात्, तेभ्योऽपि कापोतलेश्या अनन्तगुणाः, सिद्धेभ्योऽप्यनन्तगुणानां वनस्पतिकायिकाना कापोतलेश्यावतां सद्भावात्, तेभ्योऽपि नीललेश्या विशेषाधिकाः, तेभ्यो-ऽपि कृष्णलेश्या विशेषाधिकाः, क्लिष्टतराध्यवसायाना प्रभूततराणां सद्भावात् । उपसंहारमाह—'सेत्तं सत्तविहा सव्वजीवा पन्नत्ता' ॥ उक्ताः सप्तविधाः सर्वजीवाः, साम्प्रतमष्टविधानाह—

तत्थ जे ते एवमाहंसु अट्ठविहा सव्वजीवा पण्णत्ता ते णं एवमाहंसु, तंजहा—आभिणिबोहिय-नाणी सुय० ओहि० मण० केवल० मतिअन्नाणी सुयअण्णाणी विभंगअण्णाणी ॥ आभिणि-बोहियणाणी णं भंते! आभिणिबोहियणाणीत्ति कालओ केवचिरं होति?, गोयमा! जह० अंतो० उक्को० छावट्ठिसागरोवमाइं सातिरेगाइं, एवं सुयणाणीवि । ओहिणाणी णं भंते!०?, जह० एक्कं समयं उक्को० छावट्ठिसागरोवमाइं सातिरेगाइं, मणपज्जवणाणी णं भंते!०? जह० एक्कं स० उक्क० देसूणा पुव्वकोडी, केवलणाणी णं भंते!०? सादीए अपज्जवसिते, मतिअण्णाणी णं भंते!०? मइअण्णाणी तिविहे पण्णत्ते तं० अणाइए वा अपज्जवसिए अणादीए वा सपज्जवसिए सातीए वा सपज्जवसिते, तत्थ णं जे से सादीए सपज्जवसिते से जह० अंतो० उक्को० अणंतं कालं जाव अवड्ढं पोग्गलपरियट्टं देसूणं, सुयअण्णाणी एवं चेव, विभंगअण्णाणी णं भंते! विभंग० जह० एक्कं समयं उ० तेत्तीसं सागरोवमाइं देसूणाए पुव्वकोडीए अब्भहियाइं ॥ आभिणिबोहियणाणिस्स

णं भंते! अंतरं कालओ० ?, जह० अंतो० उक्क० अणंतं कालं जाव अवड्ढं पोग्गलपरियट्टं देसूणं, एवं सुयणाणिस्सवि, ओहिणाणिस्सवि, मणपज्जवणाणिस्सवि, केवलणाणिस्स णं भंते! अंतरं० ?, सादीयस्स अपज्जवसियस्स णत्थि अंतरं । मइअण्णाणिस्स णं भंते! अंतरं० ?, अणादीयस्स अपज्जवसियस्स णत्थि अंतरं, अणादीयस्स सपज्जवसियस्स णत्थि अंतरं, सादीयस्स सपज्जवसियस्स जह० अंतो० उक्को० छावट्ठिं सागरोवमाइं सातिरेगाइं, एवं सुयअण्णाणिस्सवि, विभंगणाणिस्स णं भंते! अंतरं० ?, जह० अंतो० उक्को० वणस्सतिकालो ॥ एएसि णं भंते! आभिणिवोहियणाणीणं सुयणाणि० ओहि० मण० केवल० मइअण्णाणि० सुयअण्णाणि० विभंगणाणीण य कतरे० ?, गोयमा! सव्वत्थोवा जीवा मणपज्जवणाणी ओहिणाणी असंखेज्जगुणा आभिणिबोहियणाणी सुयणाणी एए दोवि तुल्ला विसेसाहिया, विभंगणाणी असंखिज्जगुणा, केवलणाणी अणंतगुणा, मइअण्णाणी सुयअण्णाणी य दोवि तुल्ला अणंतगुणा ॥ (सू० २६७)

'तत्थे'त्यादि, तत्र ये ते एवमुक्तवन्तोऽष्टविधाः सर्वजीवाः प्रज्ञप्तास्त एवमुक्तवन्तस्तद्यथा—आभिनिवोधिकज्ञानिनः श्रुतज्ञानिनोऽवधिज्ञानिनो मनःपर्यवज्ञानिनः केवलज्ञानिनो मत्यज्ञानिनः श्रुताज्ञानिनो विभङ्गज्ञानिनश्च ॥ कायस्थितिचिन्तायामाभिनिवोधिकज्ञानी जघन्येनान्तर्मुहूर्त्तमुत्कर्षतः षट्षष्टिं सागरोपमाणि सातिरेकाणि, एवं श्रुतज्ञान्यपि, अवधिज्ञानी जघन्यत एकं समयमुत्कर्षतः षट्षष्टिः सागरोपमाणि सातिरेकाणि, मन.पर्यवज्ञानी जघन्यत एकं समयमुत्कर्षतो देशोना पूर्वकोटी, केवलज्ञानी साद्यपर्यवसित, म-

स्रारः, अत्रान्तरे सर्वेषु जीवस्थानेष्वनन्तरमुद्धृत्त्योत्पद्यन्ते । भुजपरिसर्पाणामुत्कृष्टाऽवगाहना गव्यूतपृथक्त्वं, स्थितिरुत्कर्षतः पूर्वकोटी, उद्वर्त्तनाचिन्तायां द्वितीयपृथिव्या आरभ्य यावत्सहस्रारः, अत्रान्तरे सर्वेषु जीवस्थानेषूत्पादः ॥ खचरगर्भव्युत्क्रान्तिकपञ्चेन्द्रियभेदो यथा संमूर्च्छिमखचराणां, शरीरादिद्वारकलापचिन्तनं गर्भव्युत्क्रान्तिकजलचरवत्, नवरमवगाहनास्थित्युद्वर्त्तनासु नानात्वं, तत्रोत्कर्षतोऽवगाहना धनुष्पृथक्त्वं, जघन्यतः सर्वत्राप्यङ्गुलासङ्ख्येयभागप्रमाणा, स्थितिरपि जघन्यतः सर्वत्राप्यन्तर्मुहूर्त्तमुत्कर्षतोऽत्र पल्योपमासङ्ख्येयभागः, उद्वर्त्तना तृतीयपृथिव्या आरभ्य यावत्सहस्रारः, अत्रान्तरे सर्वेषु जीवस्थानेषूत्पादः, कचित्पुस्तकान्तरेऽवगाहनास्थित्योर्यथाक्रमं सङ्ग्रहणिगाथे—"जोयणसहस्स छग्गाउयाइं तत्तो य जोयणसहस्सं । गाउयपुहुत्त भुयगे धणुयपुहुत्तं च पक्खीसु ॥ १ ॥ गब्भंमि पुव्वकोडी तिन्नि य पलिओवमाइं परमाउं । उरभुयग पुव्वकोडी पलियअसंखेज्जभागो य ॥ २ ॥" अनयोर्व्याख्या—गर्भव्युत्क्रान्तिकानामेव जलचराणामुत्कृष्टावगाहना योजनसहस्रं, चतुष्पदानां षड् गव्यूतानि, उरःपरिसर्पाणां योजनसहस्रं, भुजपरिसर्पाणां गव्यूतपृथक्त्वं, पक्षिणां धनुष्पृथक्त्व । तथा गर्भव्युत्क्रान्तिकानामेव जलचराणामुत्कृष्टा स्थितिः पूर्वकोटी, चतुष्पदानां त्रीणि पल्योपमानि, उरगाणां भुजगानां च पूर्वकोटी, पक्षिणां पल्योपमासङ्ख्येयभाग इति॥ उत्पादविधिस्तु नरकेष्वस्माद्गाथाद्वयादवसेयः—"[1]अस्सण्णी खलु पढमं दोच्चं च सरीसवा तइय पक्खी । सीहा जंति चउत्थिं उरगा पुण पंचमिं पुढविं ॥ १ ॥ छट्ठिं च इत्थियाउ मच्छा मणुया य सत्तमिं पुढविं । एसो परमुववाओ वोद्धव्वो नरयपुढवीसु ॥ २ ॥" उक्ताः पञ्चेन्द्रियतिर्यञ्चः, सम्प्रति मनुष्यप्रतिपादनार्थमाह—

१ असञ्ज्ञिन खलु प्रथमा द्वितीया च सरीसृपास्तृतीयां पक्षिण । सिंहा यान्ति चतुर्थीमुरगा पुन पञ्चमीं पृथ्वीम् ॥ १ ॥ षष्ठीं च स्त्रिय मत्स्या मनुष्याश्च सप्तमीं पृथ्वीं यावत् । एष परम उत्पातो बोद्धव्यो नारकपृथ्वीषु ॥ २ ॥

त्यज्ञानी त्रिविधस्तद्यथा—अनाद्यपर्यवसितः अनादिसपर्यवसितः सादिसपर्यवसितश्च, तत्र योऽसौ सादिसपर्यवसितः स जघन्येनान्तर्मुहूर्त्तमुत्कर्षतोऽनन्तं कालं यावदपार्द्धं पुद्गलपरावर्त्तं देशोनं, एवं श्रुताज्ञान्यपि, विभङ्गज्ञानी जघन्येनैकं समयं, द्वितीयसमये मरणतः प्रतिपाते सम्यक्त्वलाभतो ज्ञानभावेन वा विभङ्गाभावात्, उत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणि देशोनया पूर्वकोट्याऽभ्यधिकानि, तानि च सुप्रतीतानि, अप्रतिपतितविभङ्गानां धन्वन्तरिप्रमुखाणां बहूनां सप्तमपृथिवीनरकगमनश्रवणात् ॥ अन्तरचिन्तायामाभिनिबोधिकज्ञानिनोऽन्तरं जघन्येनान्तर्मुहूर्त्तमुत्कर्षतोऽनन्तं कालं यावदपार्द्धं पुद्गलपरावर्त्तं देशोनं, एवं श्रुतज्ञानिनोऽवधिज्ञानिनो मनःपर्यवज्ञानिनश्चान्तर वक्तव्यं, केवलज्ञानिनः साद्यपर्यवसितस्य नास्त्यन्तरं, मत्यज्ञानिनः श्रुताज्ञानिनश्चानाद्यपर्यवसितस्यानादिसपर्यवसितस्य च नास्त्यन्तरं, सादिसपर्यवसितस्य जघन्येनान्तर्मुहूर्त्तमुत्कर्षतः षट्षष्टिः सागरोपमाणि, विभङ्गज्ञानिनो जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतोऽनन्तं कालं वनस्पतिकालः ॥ अल्पबहुत्वचिन्तायां सर्वस्तोका मनःपर्यवज्ञानिनः, तेभ्योऽवधिज्ञानिनोऽसङ्ख्येयगुणाः, तेभ्योऽप्याभिनिबोधिकज्ञानिनः श्रुतज्ञानिनश्च विशेषाधिकाः, स्वस्थाने तु द्वयेऽपि परस्परं तुल्याः, तेभ्योऽपि विभङ्गज्ञानिनोऽसङ्ख्येयगुणाः, मिथ्यादृशां प्राभूत्यात्, एतेभ्योऽपि केवलज्ञानिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्योऽपि मत्यज्ञानिनः श्रुताज्ञानिनश्च प्रत्येकमनन्तगुणाः, स्वस्थाने तु परस्परं तुल्याः, भावना सर्वत्रापि प्राग्वत्, केवलं सूत्रपुस्तकेष्वतिसङ्क्षेप इति विवृतं ॥

**अहवा अट्ठविहा सव्वजीवा पण्णत्ता, तंजहा—णेरइया तिरिक्खजोणिया तिरिक्खजोणिणीओ मणुस्सा मणुस्सीओ देवा देवीओ सिद्धा ॥ णेरइए णं भंते! नेरइयत्ति कालओ केवचिरं होति?, गोयमा? जहन्नेणं दस वाससहस्साइं उ० तेत्तीसं सागरोवमाइं, तिरिक्खजोणिए णं**

भंते!० २, जह० अंतोमु० उक्को० वणस्सतिकालो, तिरिक्खजोणिणी णं भंते!०?, जह० अंतो० उक्को० तिन्नि पलिओवमाइं पुव्वकोडिपुहुत्तमब्भहियाइं, एवं मणूसे मणूसी, देवे जहा नेरइए, देवी णं भंते!०?, जह० दस वाससहस्साइं उ० पणपन्नं पलिओवमाइं, सिद्धे णं भंते! सिद्धेत्ति०?, गोयमा! सादीए अपज्जवसिए। णेरइयस्स णं भंते! अंतरं कालओ केवचिरं होति?, जह० अंतो० उक्को० वणस्सतिकालो, तिरिक्खजोणियस्स णं भंते! अंतरं कालओ०?, जह० अंतो० उक्को० सागरोवमसतपुहुत्तं सातिरेगं, तिरिक्खजोणिणी णं भंते! अंतरं कालओ केवचिरं होति?, गोयमा! जह० अंतोमुहुत्तं उक्क० वणस्सतिकालो, एवं मणुस्सस्सवि मणुस्सीएवि, देवस्सवि देवीएवि, सिद्धस्स णं भंते! अंतरं सादीयस्स अपज्जवसियस्स णत्थि अंतरं ॥ एतेसि णं भंते! णेरइयाणं तिरिक्खजोणियाणं तिरिक्खजोणिणीणं मणूसाणं मणूसीणं देवाणं देवीणं सिद्धाण य कयरे०?, गोयमा! सव्वत्थोवा मणुस्सीओ मणुस्सा असंखेज्जगुणा नेरइया असंखिज्जगुणा तिरिक्खजोणिणीओ असंखिज्जगुणाओ देवा संखिज्जगुणा देवीओ संखेज्जगुणाओ सिद्धा अणंतगुणा तिरिक्खजोणिया अनंतगुणा। सेत्तं अट्ठविहा सव्वजीवा पण्णत्ता ॥ (सू० २६८)

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण अष्टविधाः सर्वजीवा. प्रज्ञप्तास्तद्यथा—नैरयिकास्तिर्यग्योनास्तिर्यग्योन्यो मनुष्या मनुष्यो देवा देव्यः सिद्धाः। तत्र नैरयिकादीनां देवीपर्यन्ताना कायस्थितिरन्तरं च संसारसमापन्नसप्तविधप्रतिपत्ताविव, सिद्धस्तु कायस्थितिचि-

न्तायां साद्यपर्यवसितः, अन्तरचिन्तायां नास्त्यन्तरं ॥ अल्पबहुत्वं, सर्वस्तोका मनुष्याः, सङ्ख्येयकोटीकोटीप्रमाणत्वात्, ताभ्यो मानुष्योऽसङ्ख्येयगुणाः, श्रेण्यसङ्ख्येयभागप्रमाणत्वात्, तेभ्यो नैरयिका असङ्ख्येयगुणाः, तेभ्यस्तिर्यग्योन्योऽसङ्ख्येयगुणाः, ताभ्यो देवाः सङ्ख्येयगुणाः, तेभ्यो देव्यः सङ्ख्येयगुणाः, युक्तिः सर्वत्रापि संसारसमापन्नसप्तविधप्रतिपत्ताविव, देवीभ्यः सिद्धा अनन्तगुणाः, तेभ्योऽपि तिर्यग्योनिका अनन्तगुणाः । उपसंहारमाह—'सेत्तं अट्ठविहा सव्वजीवा पन्नत्ता' उक्ता अष्टविधाः सर्वजीवाः, सम्प्रति नवविधानाह—

तत्थ णं जे ते एवमाहंसु णवविधा सव्वजीवा पं० ते णं एवमाहंसु, तंजहा—एगिंदिया बेंदिया तेंदिया चउरिंदिया णेरइया पंचेंदियतिरिक्खजोणिया मणूसा देवा सिद्धा ॥ एगिंदिए णं भंते! एगिंदियत्ति कालओ केवचिरं होइ?, गोयमा! जह० अंतोमु० उक्को० वणस्स०, बेंदिए णं भंते! जह० अंतो० उक्को० संखेज्जं कालं, एवं तेइंदिएवि, चउ०, णेरइया णं भंते!० २ जह० दस वाससहस्साइं उक्को० तेत्तीसं सागरोवमाइं, पंचेंदियतिरिक्खजोणिए णं भंते! जह० अंतो० उक्को० तिण्णि पलिओवमाइं पुव्वकोडिपुहुत्तमब्भहियाइं, एवं मणूसेवि, देवा जहा णेरइया, सिद्धे णं भंते!० २? सादीए अपज्जवसिए ॥ एगिंदियस्स णं भंते! अंतरं कालओ केवचिरं होति?, गोयमा! जह० अंतो० उक्को० दो सागरोवमसहस्साइं संखेज्जवासमब्भहियाइं, बेंदियस्स णं भंते! अंतरं कालओ केवचिरं होति?, गोयमा! जह० अंतो० उक्को० वणस्सति-

कालो, एवं तेंदियस्सवि चउरिंदियस्सवि णेरइयस्सवि पंचेंदियतिरिक्खजोणियस्सवि मणूसस्सवि देवस्सवि सव्वेसिमेवं अंतरं भाणियव्वं, सिद्धस्स णं भंते! अंतरं कालओ०?, सादीयस्स अपज्जवसियस्स णत्थि अंतरं ॥ एतेसि णं भंते! एगिंदियाणं बेइंदि० तेइंदि० चउरिंदियाणं णेरइयाणं पंचेंदियतिरिक्खजोणियाणं मणूसाणं देवाणं सिद्धाण य कयरे २?, गोयमा! सव्वत्थोवा मणुस्सा णेरइया असंखेज्जगुणा देवा असंखेज्जगुणा पंचेंदियतिरिक्खजोणिया असंखेज्जगुणा चउरिंदिया विसेसाहिया तेइंदिया विसेसाहिया बेंदिया विसे० सिद्धा अणंतगुणा एगिंदिया अणंतगुणा ॥ (सू० २६९)

'तत्थे'त्यादि, तत्र ये ते एवमुक्तवन्तो नवविधाः सर्वजीवाः प्रज्ञप्तास्त एवमुक्तवन्तस्तद्यथा—एकेन्द्रिया द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रिया नैरयिकास्तिर्यग्योनिका मनुष्या देवाः सिद्धाः ॥ अमीषां कायस्थितिचिन्तायामेकेन्द्रियस्य जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतो वनस्पतिकालः, द्वीन्द्रियस्य जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतः सङ्ख्येयं कालं, एवं त्रीन्द्रियचतुरिन्द्रिययोरपि वक्तव्यं, नैरयिकस्य जघन्यतो दश वर्षसहस्राणि उत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणि, तिर्यग्योनिकपञ्चेन्द्रियस्य जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतः पूर्वकोटीपृथक्त्वाभ्यधिकानि त्रीणि पल्योपमानि, एवं मनुष्यस्यापि, देवानां यथा नैरयिकाणां ॥ अन्तरचिन्तायामेकेन्द्रियस्य जघन्यमन्तर्मुहूर्त्तमुत्कर्षतो द्वे सागरोपमसहस्रे सङ्ख्येयवर्षाभ्यधिके, द्वित्रिचतुरिन्द्रियनैरयिकतिर्यक्पञ्चेन्द्रियमनुष्यदेवानां जघन्यतः प्रत्येकमन्तर्मुहूर्त्तमुत्कर्षतो वनस्पतिकालः, सिद्धस्य साद्यपर्यवसितस्य नास्त्यन्तरं ॥ अल्पबहुत्वचिन्तायां सर्वस्तोका मनुष्या नैरयिका असङ्ख्येयगुणाः देवा असङ्ख्येयगुणाः तिर्य-

कृपञ्चेन्द्रिया असङ्ख्येयगुणाः चतुरिन्द्रिया विशेषाधिकाः त्रीन्द्रिया विशेषाधिकाः द्वीन्द्रिया विशेषाधिकाः सिद्धा अनन्तगुणाः एकेन्द्रिया अनन्तगुणाः ॥

अहवा णवविधा सव्वजीवा पण्णत्ता, तंजहा—पढमसमयनेरइया अपढमसमयणेरइया पढमसमयतिरिक्खजोणिया अपढमसमयतिरिक्खजोणिया पढमसमयमणूसा अपढमसमयमणूसा पढमसमयदेवा अपढमसमयदेवा सिद्धा य ॥ पढमसमयणेरइया णं भंते!०?, गोयमा! एक्कं समयं, अपढमसमयणेरइयस्स णं भंते!० २?, जहन्नेणं दस वाससहस्साइं समऊणाइं, उक्को० तेत्तीसं सागरोवमाइं समऊणाइं, पढमसमयतिरिक्खजोणियस्स णं भंते!०?, एक्कं समयं, अपढमसमयतिरिक्खजोणियस्स णं भंते!०?, जह० खुड्डागं भवग्गहणं समऊणं उक्को० वणस्सतिकालो, पढमसमयमणूसे णं भंते!०, एक्कं समयं, अपढमसमयमणूस्से णं भंते!०?, जह० खुड्डागं भवग्गहणं समऊणं उक्को० तिन्नि पलिओवमाइं पुव्वकोडिपुहुत्तमब्भहियाइं, देवे जहा णेरइए, सिद्धे णं भंते! सिद्धेत्ति कालओ केवचिरं होति?, गोयमा! सादीए अपज्जवसिते ॥ पढमसमयणेरइयस्स णं भंते! अंतरं कालओ०?, गोयमा! जह० दस वाससहस्साइं अंतोमुहुत्तमब्भहियाइं उक्कोसेणं वणस्सतिकालो, अपढमसमयणेरइयस्स णं भंते! अंतरं०?, जह० अंतो० उक्को० वणस्सतिकालो, पढमसमयतिरिक्खजोणियस्स णं भंते! अंतरं कालतो०?, जह० दो खु-

ड्डागाइं भवग्गहणाइं समऊणाइं उक्को० वण०, अपढमसमयतिरिक्खजोणियस्स णं भंते! अंतरं कालतो०?, जह० खुड्डागं भवग्गहणं समयाहियं उ० सागरोवमसयपुहुत्तं सातिरेगं, पढमसमयमणूसस्स जहा पढमसमयतिरिक्खजोणियस्स, अपढमसमयमणूसस्स णं भंते! अंतरं कालओ०?, ज० खुड्डागं भवग्गह० समयाहियं उ० वण०, पढमसमयदेवस्स जहा पढमसमयणेरतियस्स, अपढमसमयदेवस्स जहा अपढमसमयणेरइयस्स, सिद्धस्स णं भंते!०, सादीयस्स अपज्जवसियस्स णत्थि अंतरं ॥ एएसि णं भंते! पढमसमयनेरइयाणं पढमस० तिरिक्खजोणियाणं पढमसमयमणूसाणं पढमस० देवाण य कयरे० २?, गोयमा! सव्वत्थोवा पढमसमयमणूसा पढमसमयणेरइया असंखिज्जगुणा पढमसमयदेवा असं० पढमस० तिरिक्खजो० असं०। एएसि णं भंते! अपढमस० नेरइयाणं अपढमसमयतिरिक्खजोणि० अपढमसमयमणूसाणं अपढमसमयदेवाण य कयरे० २?, गोयमा! सव्वत्थोवा अपढमसमयमणूसा अपढमसम० नेरइ० असं० अपढमसमयदेवा अस० अपढमसमयतिरि० अणंतगुणा। एतेसि णं भंते! पढमस० नेरइयाणं अपढमसम० णेरइयाण य कयरे० २?, गोयमा! सव्वत्थोवा पढमसमयणेरइया अपढमसमयणेरइया असंखेज्जगुणा, एतेसि णं भंते! पढमसमयतिरिजोक्ख० अपढमस० तिरि० जोणि० कतरे०?, गोयमा! सव्व० पढमसमयतिरि० अपढमसमयतिरि० जोणि० अणंत०, मणुयदेवअप्पाबहुयं जहा णेरइ-

याणं। एतेसि णं भंते! पढमस० णेरइ० पढमस० तिरिक्खाणं पढमस० मणूसाणं पढमसमयदेवाणं अपढमसमयनेरइ० अपढमसमयतिरिक्खजोणि० अपढमसमयमणूसा० अपढमसमयदेवाणं सिद्धाण य कयरे० २?, गोयमा! सव्व० पढमस० मणूसा अपढमसम० मणु० असं० पढमसमयनेरइ० असं० पढमसमयदेवा असंखे० पढमसमयतिरिक्खजो० असं० अपढमसमयनेर० असं० अपढमस० देवा असंखे० सिद्धा अणं० अपढमस० तिरि० अणंतगुणा। सेत्तं नवविहा सव्वजीवा पण्णत्ता॥ (सू० २७०)

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण नवविधाः सर्वजीवाः प्रज्ञप्तास्तद्यथा—प्रथमसमयनैरयिका अप्रथमसमयनैरयिकाः प्रथमसमयतिर्यग्योनिका अप्रथमसमयतिर्यग्योनिकाः प्रथमसमयमनुष्या अप्रथमसमयमनुष्याः प्रथमसमयदेवा अप्रथमसमयदेवाः सिद्धाः॥ कायस्थितिचिन्तायां प्रथमसमयनैरयिकस्य कायस्थितिरेकं समयं, अप्रथमसमयनैरयिकस्य जघन्यतो दश वर्षसहस्राणि समयोनानि उत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणि समयोनानि, प्रथमसमयतिर्यग्योनिकस्यैकं समयं, अप्रथमसमयतिर्यग्योनिकस्य जघन्यतः क्षुल्लकभवग्रहणं समयोनमुत्कर्षतो वनस्पतिकालः, प्रथमसमयमनुष्यस्यैकं समयं, अप्रथमसमयस्य जघन्यतः क्षुल्लकभवग्रहणं समयोनमुत्कर्षतः पूर्वकोटिपृथक्त्वाभ्यधिकानि त्रीणि पल्योपमानि, देवा यथा नैरयिकाः, सिद्धाः साद्यपर्यवसिताः॥ अन्तरचिन्तायां प्रथमसमयनैरयिकस्य जघन्यमन्तरं दशवर्षसहस्राणि अन्तर्मुहूर्त्ताभ्यधिकानि, उत्कर्षतो वनस्पतिकालः, अप्रथमसमयनैरयिकस्य जघन्यतोऽन्तरमन्तर्मुहूर्त्तमुत्कर्षतो वनस्पतिकालः, प्रथमसमयतिर्यग्योनिकस्य जघन्यतो द्वे क्षुल्लकभवग्रहणे समयोने उत्कर्षतो वनस्पतिकालः, अप्र-

थमसमयतिर्यग्योनिकस्य जघन्यतः क्षुल्लकभवग्रहणं समयाधिकं उत्कर्षतः सागरोपमशतपृथक्त्वं सातिरेकं, प्रथमसमयमनुष्यस्य जघन्यतो द्वे क्षुल्लकभवग्रहणे समयोने उत्कर्षतो वनस्पतिकालः, अप्रथमसमयमनुष्यस्य जघन्यतः क्षुल्लकभवग्रहणं समयाधिकमुत्कर्षतो वनस्पतिकालः, प्रथमसमयदेवस्य जघन्यतो दश वर्षसहस्राणि अन्तर्मुहूर्ताभ्यधिकानि उत्कर्षतो वनस्पतिकालः, अप्रथमसमयदेवस्य जघन्यतोऽन्तर्मुहूर्तमुत्कर्षतो वनस्पतिकालः, सिद्धस्य साद्यपर्यवसितस्य नास्त्यन्तरं ॥ सम्प्रत्यल्पबहुत्वचिन्ता, तत्राल्पबहुत्वान्यत्र चत्वारि, तद्यथा—प्रथमं प्रथमसमयनैरयिकादीनां, द्वितीयमप्रथमसमयनैरयिकादीनां, तृतीयं प्रथमाप्रथमसमयनैरयिकादीनां प्रत्येकं, चतुर्थं सर्वसमुदायेन, तत्र प्रथममिदम्—सर्वस्तोकाः प्रथमसमयमनुष्याः, तेभ्यः प्रथमसमयनैरयिका असङ्ख्येयगुणाः, तेभ्यः प्रथमसमयदेवा असङ्ख्येयगुणाः, तेभ्यः प्रथमसमयतिर्यग्योनिका असङ्ख्येयगुणाः, नारकादिशेषगतित्रयादागतानामेव प्रथमसमये वर्तमानानां प्रथमसमयतिर्यग्योनिकत्वात् । द्वितीयमेवम्—सर्वस्तोका अप्रथमसमयमनुष्याः, तेभ्योऽप्रथमसमयनैरयिका असङ्ख्येयगुणाः, तेभ्योऽप्रथमसमयदेवा असङ्ख्येयगुणाः, तेभ्योऽप्रथमसमयतिर्यग्योनिका अनन्तगुणाः, निगोदजीवानामनन्तत्वात् । तृतीयमेवम्—सर्वस्तोकाः प्रथमसमयनैरयिका अप्रथमसमयनैरयिका असङ्ख्येयगुणाः, तथा प्रथमसमयतिर्यग्योनिकाः सर्वस्तोकाः अप्रथमसमयतिर्यग्योनिका अनन्तगुणाः, तथा सर्वस्तोकाः प्रथमसगयमनुष्या. अप्रथमसमयमनुष्या असङ्ख्येयगुणाः, तथा सर्वस्तोकाः प्रथमसमयदेवाः अप्रथमसमयदेवा असङ्ख्येयगुणाः । सर्वसमुदायगतं चतुर्थमेवम्—सर्वस्तोकाः प्रथमसमयमनुष्या. अप्रथमसमयमनुष्या असङ्ख्येयगुणाः, तेभ्यः प्रथमसमयनैरयिका असङ्ख्येयगुणाः, तेभ्योऽपि प्रथमसमयदेवा असङ्ख्येयगुणाः, तेभ्योऽपि प्रथमसमयतिर्यग्योऽसङ्ख्येयगुणाः, तेभ्योऽपि अप्रथमसमयनैरयिका असङ्ख्येयगुणाः, तेभ्योऽप्यप्रथमसमयदेवा असङ्ख्येयगुणाः, तेभ्यः सिद्धा अनन्तगुणाः, तेभ्योऽप्रथमसमय-

तिर्यग्योनिका अनन्तगुणाः । उपसंहारमाह—'सेत्तं नवविहा सव्वजीवा पण्णत्ता' ॥ उक्ता नवविधाः सर्वजीवाः, सम्प्रति दशविधानाह—

तत्थ णं जे ते एवमाहंसु दसविधा सव्वजीवा पण्णत्ता ते णं एवमाहंसु, तंजहा—पुढविकाइया आउकाइया तेउकाइया वाउकाइया वणस्सतिकाइया बिंदिया तिंदिया चउरिं० पंचें० अणिंदिया ॥ पुढविकाइए णं भंते! पुढविकाइएत्ति कालओ केवचिरं होति?, गोयमा! जह० अंतो० उक्को० असंखेज्जं कालं असंखेज्जाओ उस्सप्पिणीओसप्पिणीओ कालओ खेत्तओ असंखेज्जा लोया, एवं आउतेउवाउकाइए, वणस्सतिकाइए णं भंते!० २?, गोयमा! जह० अंतो० उक्को० वणस्सतिकालो, बेंदिए णं भंते!०?, जह० अंतो० उक्को० संखेज्जं कालं, एवं तेइंदिएवि चउरिंदिएवि, पंचिंदिए णं भंते!०?, गोयमा! जह० अंतो० उक्को० सागरोवमसहस्सं सातिरेगं; अणिंदिए णं भंते!०?, सादीए अपज्जवसिए ॥ पुढविकाइयस्स णं भंते! अंतरं कालओ केवचिरं होति?, गोयमा! जह० अंतो० उक्को० वणस्सतिकालो, एवं आउकाइयस्स तेउ० वाउ०, वणस्सइकाइयस्स णं भंते! अंतरं कालओ०?, जा चेव पुढविकाइयस्स संचिट्ठणा, बियतियचउरिंदियपंचेंदियाणं एतेसिं चउण्हंपि अंतरं जह० अंतो० उक्को० वणस्सइकालो, अणिंदियस्स णं भंते! अंतरं कालओ केवचिरं होति?, गोयमा! सादीयस्स अपज्जवसियस्स णत्थि अंतरं ॥ ए-

तेसि णं भंते! पुढविकाइयाणं आउ० तेउ० वाउ० वण० बेंदियाणं तेइंदियाणं चउरिं० पंचेंदियाणं अणिंदियाण य कतरे २०१, गोयमा! सव्वत्थोवा पंचेंदिया चतुरिंदिया विसेसाहिया तेइंदि० विसे० बेंदि० विसे० तेउकाइया असंखिज्जगुणा पुढविकाइया वि० आउ० वि० वाउ० वि० अणिंदिया अणंतगुणा वणस्सतिकाइया अणंतगुणा ॥ ( सू० २७१ )

'तत्थे'त्यादि, तत्र ये ते एवमुक्तवन्तो दशविधाः सर्वजीवाः प्रज्ञप्तास्त एवमुक्तवन्तस्तद्यथा—पृथिवीकायिकाः अप्कायिकाः तेजस्कायिकाः वायुकायिका· वनस्पतिकायिका. द्वीन्द्रिया. त्रीन्द्रिया. चतुरिन्द्रिया पञ्चेन्द्रियाः अनिन्द्रियाः, तत्र पृथिवीकायिकस्य कायस्थितिर्जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्पतोऽसङ्ख्येय कालं, असङ्ख्येया उत्सर्पिण्यवसर्पिण्य कालत. क्षेत्रतोऽसङ्ख्येया लोकाः, एवमप्तेजोवायूनामपि वक्तव्यं, वनस्पतिकायिकस्य जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्पतोऽनन्तं कालं, अनन्ता उत्सर्पिण्यवसर्पिण्यः कालत. क्षेत्रतोऽनन्ता लोका असङ्ख्येयाः पुद्गलपरावर्त्ता आवलिकाया असङ्ख्येयो भागः, द्वित्रिचतुरिन्द्रियाणां जघन्यतः प्रत्येकमन्तर्मुहूर्त्तमुत्कर्पत. प्रत्येकं सङ्ख्येय. काल., पञ्चेन्द्रियस्य जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्पतः सागरोपमशतपृथक्त्वं सातिरेक, अनिन्द्रियः साद्यपर्यवसितः ॥ अन्तरचिन्तायां पृथिवीकायिकस्य जघन्यतोऽन्तरमन्तर्मुहूर्त्तमुत्कर्पतो वनस्पतिकालः, एवं यावत्पञ्चेन्द्रियस्य, नवरं वनस्पतिकायिकस्योत्कर्पतोऽसङ्ख्येयं कालं, असङ्ख्येया उत्सर्पिण्यवसर्पिण्यः कालतः क्षेत्रतोऽसङ्ख्येया लोका·, अनिन्द्रियस्य नास्त्यन्तरं, साद्यपर्यवसितत्वात् ॥ अल्पवहुत्वचिन्तायां सर्वस्तोकाः पञ्चेन्द्रियाश्चतुरिन्द्रिया विशेपाधिकाः त्रीन्द्रिया विशेपाधिकाः द्वीन्द्रिया विशेपाधिकाः तेजस्कायिका

से किं तं मणुस्सा?, २ दुविहा पण्णत्ता, तंजहा—संमुच्छिममणुस्सा य गब्भवक्कंतियमणुस्सा य ॥ कहि णं भंते! संमुच्छिममणुस्सा संमुच्छंति?, गोयमा! अंतो मणुस्सखेत्ते जाव करेंति। तेसि णं भंते! जीवाणं कति सरीरगा पण्णत्ता?, गोयमा! तिन्नि सरीरगा पन्नत्ता, तंजहा—ओरालिए तेयए कम्मए, सेतं संमुच्छिममणुस्सा। से किं तं गब्भवक्कंतियमणुस्सा?, २ तिविहा पण्णत्ता, तंजहा—कम्मभूमया अकम्मभूमगा अंतरदीवजा, एवं माणुस्सभेदो भाणियव्वो जहा पण्णवणाए तहा णिरवसेसं भाणियव्वं जाव छउमत्था य केवली य, ते समासतो दुविहा पण्णत्ता, तंजहा—पज्जत्ता य अपज्जत्ता य। तेसि णं भंते! जीवाणं कति सरीरा प०?, गोयमा! पंच सरीरया, तंजहा—ओरालिए जाव कम्मए। सरीरोगाहणा जहन्नेणं अंगुलअसंखेज्ज० उक्कोसेणं तिण्णि गाउयाइं छच्चेव संघयणा छस्संठाणा। ते णं भंते! जीवा किं कोहकसाई जाव लोभकसाई अकसाई?, गोयमा! सव्वेवि। ते णं भंते! जीवा किं आहारसन्नोवउत्ता० लोभसन्नोवउत्ता नोसन्नोवउत्ता?, गोयमा! सव्वेवि। ते णं भंते! जीवा किं कण्हलेसा य जाव अलेसा?, गोयमा! सव्वेवि। सोइंदियोवउत्ता जाव नोइंदियोवउत्तावि, सव्वे समुग्घाता, तंजहा—वेयणासमुग्घाते जाव केवलिसमुग्घाए, सन्नीवि नोसन्नी असन्नीवि, इत्थिवेयावि जाव अवेदावि, पंच पज्जत्ती, तिविहावि दिट्ठी, चत्तारि दंसणा, णाणीवि अण्णाणीवि, जे णाणी ते अत्थेगतिया दुणाणी

असङ्ख्येयगुणाः पृथिवीकायिका विशेषाधिकाः अप्कायिका विशेषाधिकाः वायुकायिका विशेषाधिकाः अनिन्द्रिया अनन्तगुणाः वनस्पतिकायिका अनन्तगुणाः ॥

अहवा दसविहा सव्वजीवा पण्णत्ता, तंजहा—पढमसमयणेरइया अपढमसमयनेरइया पढमसमयतिरिक्खजोणिया अपढमसमयतिरिक्खजोणिया पढमसमयमणूसा अपढमसमयमणूसा पढमसमयदेवा अपढमसमयदेवा पढमसमयसिद्धा अपढमसमयसिद्धा ॥ पढमसमयनेरइया णं भंते! पढमसमयणेरइएत्ति कालओ केवचिरं होति?, गोयमा! एक्कं समयं, अपढमसमयनेरइए णं भंते!०? जहन्नेणं दस वाससहस्साइं समऊणाइं उक्कोसेणं तेत्तीसं सागरोवमाइं समऊणाइं, पढमसमयतिरिक्खजोणिया णं भंते!० २?, गोयमा! एक्कं समयं, अपढमसमयतिरिक्ख० जह० खुड्डागं भवग्गहणं समऊणं उक्को० वणस्सइकालो, पढमसमयमणूसे णं भंते!० २?, एक्कं समयं, अपढमस० मणूसे णं भंते!०?, जह० खुड्डागं भवग्गहणं समऊणं उक्को० तिण्णि पलिओवमाइं पुव्वकोडिपुहुत्तमब्भहियाइं, देवे जहा णेरइए, पढमसमयसिद्धे णं भंते!० २?, एक्कं समयं, अपढमसमयसिद्धे णं भंते!० २?, सादीए अपज्जवसिए। पढमसमयणेर० भंते! अंतरं कालओ०?, ज० दस वाससहस्साइं अंतोमुहुत्तमब्भहियाइं उक्को० वण०, अपढमसमयणेर० अंतरं कालओ केव०?, जह० अंतो० उ० वण०, पढमसमयतिरिक्खजोणियस्स अंतरं केवचिरं होइ?, गो-

घमा! जह० दो खुड्डागभवग्गहणाइं समऊणाइं उक्को० वण०, अपढमसमयतिरिक्खजोणियस्स णं भंते!०?, जह० खुड्डागभवग्गहणं समयाहियं उक्को० सागरोवमसयपुहुत्तं सातिरेगं, पढमसमयमणूसस्स णं भंते! अंतरं कालओ०?, जह० दो खुड्डागभवग्गहणाइं समऊणाइं उक्को० वण०, अपढमसमयमणूसस्स णं भंते! अंतरं०?, जह० खुड्डागं भव० समयाहियं उक्को० वणस्स०, देवस्स णं अंतरं जहा णेरइयस्स, पढमसमयसिद्धस्स णं भंते! अंतरं?, णत्थि, अपढमसमयसिद्धस्स णं भंते! अंतरं कालओ केवचिरं होति?, गोयमा! सादीयस्स अपज्जवसियस्स णत्थि अंतरं ॥ एतेसि णं भंते! पढमस० णेर० पढमस० तिरिक्खजोणियाणं पढमसमयमणूसाणं पढमसमयदेवाणं पढमसमयसिद्धाण य कतरे २०?, गोयमा! सव्वत्थोवा पढमसमयसिद्धा पढमसमयमणूसा असंखे० पढमस० णेरइया असंखेज्जगुणा पढमस० देवा असं० पढमस० तिरि० असं० । एतेसि णं भंते! अपढमसमयनेरइयाणं जाव अपढमसमयसिद्धाण य कयरे०?, गोयमा! सव्वत्थोवा अपढमस० मणूसा अपढमस० नेरइया असंखि० अपढमस० देवा असंखि० अपढमस० सिद्धा अणंतगुणा अपढमस० तिरि० जो० अणंतगुणा । एतेसि णं भंते! पढमस० णेरइयाणं अपढमस० णेरइयाण य कतरे २?, गोयमा! सव्वत्थोवा पढमस० णेरइया अपढमस० नेरइया असंखे०, एतेसि णं भंते! पढमस० तिरिक्खजोणियाणं अपढमस० तिरिक्खजोणि-

याण य कतरे २? गोयमा! सव्वत्थोवा पढमसमयतिरिक्खजो० अपढमस० तिरिक्खजोणिया अणंतगुणा, एतेसि णं भंते! पढमस० मणूसाणं अपढमसमयमणूसाण य कतरे २?, गोयमा! सव्वत्थोवा पढमसम० मणूसा अपढमस० मणूसा असंखे०, जहा मणूसा तहा देवावि, एतेसि णं भंते! पढमसमयसिद्धाणं अपढमसमयसिद्धाण य कयरे २ अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सव्वत्थोवा पढमसमयसिद्धा अपढमसम० सिद्धा अणंतगुणा। एतेसि णं भंते! पढमसमयणेरइयाणं अपढमसमयणेरइयाणं पढमस० तिरि० जोणि० अपढमस० तिरि० जो० प० समयमणू० अपढमस० मणू० पढ० स० देवाणं अप० सम० देवाणं पढमस० सिद्धाणं अपढमसम० सिद्धाण य कतरे २ अप्पा वा बहुया वा तुल्ला वा विसे०?, गोयमा! सव्वत्थोवा पढमस० सिद्धा पढमस० मणू० असं० अप० सम० मणू० असंखि० पढमसम० णेरइ० असं० पढमस० देवा असं० पढमस० तिरि० असं० अपढमस० णेर० असंखे० अपढमस० देवा असं० अपढमस० सिद्धा अणंत० अपढमस० तिरि० अणंतगुणा। सेत्तं दसविहा सव्वजीवा पण्णत्ता। सेत्तं सव्वजीवाभिगमे ॥ (सू० २७२) ॥ इति जीवाजीवाभिगमसुत्तं सम्मत्तं ॥ सूत्रे ग्रन्थाग्रम् ४७५० ॥

'अहवे'त्यादि, 'अथवा' प्रकारान्तरेण दशविधाः सर्वजीवाः प्रज्ञप्तास्तद्यथा—प्रथमसमयनैरयिकाः अप्रथमसमयनैरयिकाः प्रथम-

समयतिर्यग्योनिकाः अप्रथमसमयतिर्यग्योनिकाः प्रथमसमयमनुष्याः अप्रथमसमयमनुष्याः प्रथमसमयदेवाः अप्रथमसमयदेवाः प्रथमसमयसिद्धाः अप्रथमसमयसिद्धाः ॥ कायस्थितिरन्तरं च प्रथमसमयनारकादीनामप्रथमसमयदेवपर्यन्ताना पूर्ववत्, प्रथमसमयसिद्धस्य कायस्थितिरेकं समयं, अप्रथमसमयसिद्धः साद्यपर्यवसित., प्रथमसमयसिद्धस्य नास्त्यन्तरं, भूयः प्रथमसमयसिद्धत्वाभावात्, अप्रथमसमयसिद्धस्यापि नास्त्यन्तरमपर्यवसितत्वात् ॥ अल्पबहुत्वान्यत्रापि चत्वारि, तत्र प्रथममिदं—सर्वस्तोकाः प्रथमसमयसिद्धाः, अष्टोत्तरशतादूर्द्ध्वमभावात्, तेभ्यः प्रथमसमयमनुष्या असङ्ख्येयगुणा. तेभ्य प्रथमसमयनैरयिका असङ्ख्येयगुणाः तेभ्यः प्रथमसमयदेवा असङ्ख्येयगुणाः तेभ्यः प्रथमसमयतिर्यग्भ्योऽसङ्ख्येयगुणाः । द्वितीयमिदं—सर्वस्तोका अप्रथमसमयमनुष्या अप्रथमसमयनैरयिका असङ्ख्येयगुणा. अप्रथमसमयदेवा असङ्ख्येयगुणाः अप्रथमसमयसिद्धा अनन्तगुणाः अप्रथमसमयतिर्यग्भ्योऽनन्तगुणाः । तृतीयं प्रत्येकभाविनैरयिकतिर्यङ्मनुष्यदेवाना पूर्ववत्, सिद्धानामेवं—सर्वस्तोकाः प्रथमसमयसिद्धा अप्रथमसमयसिद्धा अनन्तगुणाः । समुदायगतं चतुर्थमेवं—सर्वस्तोकाः प्रथमसमयसिद्धाः तेभ्यः प्रथमसमयमनुष्या असङ्ख्येयगुणा. तेभ्योऽप्रथमसमयमनुष्या असङ्ख्येयगुणाः तेभ्यः प्रथमसमयनैरयिका असङ्ख्येयगुणाः तेभ्यः प्रथमसमयदेवा असङ्ख्येयगुणा तेभ्य प्रथमसमयतिर्यग्भ्योऽसङ्ख्येयगुणाः तेभ्योऽप्रथमसमयनैरयिका असङ्ख्येयगुणा. तेभ्योऽप्रथमसमयदेवा असङ्ख्येयगुणा तेभ्योऽप्रथमसमयसिद्धा अनन्तगुणाः तेभ्योऽप्रथमसमयतिर्यग्भ्योऽनन्तगुणाः, भावना सर्वत्रापि प्राग्वत्, नवरं सूत्रे संक्षेप इति विवृतम् । निगमनमाह—'सेत्तं दसविहा सव्वजीवा पन्नत्ता,' महानिगमनमाह—सोऽयं सर्वजीवाभिगम इति । विवृतमुद्देशतोऽध्ययनशास्त्रमर्हद्वचनमित्येतदतिगम्भीरार्थं, अविषयोऽस्य सारः स्थूलबुद्धीनां, न खलु पश्यति सूक्ष्मान् रूपविशेषान् मन्दलोचनः, स्थूलदर्शनमपि हिताय मध्यस्थानां, द्वेषाद्ययोगतोऽवश्यं तत्फलयो-

गात्, प्रक्षपातोऽप्यत्र कल्याणहेतुः, राजयक्ष्माऽहङ्कारादिदुःखसमुदयस्य, विपर्यस्तदर्शनं त्वनर्थायेति त्याज्य एतदनुगुणो व्यवहारः, कार्या सदैव सन्मार्गप्रतिपत्तये मार्गानुसारिबोधबहुश्रुतजनैः सङ्गतिः, तद्योगतः सकलापायविरहिणां चिरमभिमतफलसिद्धेः ॥

जयति परिस्फुटविमल–ज्ञानविभासितसमस्तवस्तुगणः । प्रतिहतपरतीर्थिमतः श्रीवीरजिनेश्वरो भगवान् ॥ १ ॥
सरस्वती तमोवृन्दं, शरज्ज्योत्स्नेव निघ्नती । नित्यं वो मङ्गलं दिश्यान्मुनिभिः पर्युपासिता ॥ २ ॥
जीवाजीवाभिगमं विवृण्वताऽवापि मलयगिरिणेह । कुशलं तेन लभन्तां मुनयः सिद्धान्तसद्बोधम् ॥ ३ ॥

॥ इति श्रीमलयगिरिविरचिता श्रीजीवाजीवाभिगमवृत्तिः समाप्ता ॥ ग्रन्थाग्रम् १४००० ॥

॥ इति श्रीमन्मलयगिर्याचार्यविहितविवरणयुतं श्रीमज्जीवाजीवाभिगमाख्यमुपाङ्गं समाप्तिं गतम् ॥

इति श्रेष्ठि देवचन्द्र लालभाई जैनपुस्तकोद्धारे ग्रन्थाङ्कः ५०

समाप्तेयं श्रीमज्जीवाजीवाभिगमोपाङ्गव्याख्या ॥

इति श्रेष्ठि देवचन्द्र लालभाई जैनपुस्तकोद्धारे ग्रन्थाङ्कः ५०.

# शेठ देवचंद लालभाई जैन पुस्तकोद्धार फण्ड.




ह्वेरी बजार-मुंबई.

संवत १९७९.

ब्रान्च गोपीपुरा-सुरत.

,०—७—२३

अनसुया प्रि प्रेस. मुंबइ.

अत्थेगतिया तिणाणी अत्थेगइया चउणाणी अत्थेगतिया एगणाणी, जे दुण्णाणी ते नियमा आभिणिबोहियणाणी सुतणाणी य, जे तिणाणी ते आभिणिबोहियणाणी सुतणाणी ओहिणाणी य, अहवा आभिणिबोहियणाणी सुयनाणी मणपज्जवणाणी य, जे चउणाणी ते णियमा आभिणिबोहियणाणी सुत० ओहि० मणपज्जवणाणी य, जे एगणाणी ते नियमा केवलनाणी, एवं अन्नाणीवि दुअन्नाणी तिअण्णाणी, मणजोगीवि वइकायजोगीवि अजोगीवि, दुविहउवओगे, आहारो छद्दिसिं, उववातो नेरइएहिं अहे सत्तमवज्जेहिं तिरिक्खजोणिएहिंतो, उववाओ असंखेज्जवासाउयवज्जेहिं मणुएहिं अकम्मभूमगअंतरदीवगअसंखेज्जवासाउयवज्जेहिं, देवेहिं सव्वेहिं, ठिती जहन्नेणं अंतोमुहुत्तं उक्कोसेणं तिण्णि पलिओवमाइं, दुविधावि मरंति, उव्वट्टित्ता नेरइयादिसु जाव अणुत्तरोववाइएसु, अत्थेगतिया सिज्झंति जाव अंतं करेंति । ते णं भंते! जीवा कतिगतिया कइआगइया पण्णत्ता?, गोयमा! पंचगतिया चउआगतिया परित्ता संखिज्जा पण्णत्ता, सेत्तं मणुस्सा ॥ ( सू० ४१ )

अथ के ते मनुष्याः?, सूरिराह—मनुष्या द्विविधाः प्रज्ञप्ताः, तद्यथा—संमूर्च्छिममनुष्याश्च गर्भव्युत्क्रान्तिकमनुष्याश्च, चशब्दौ स्वगतानेकभेदसूचकौ । तत्र संमूर्च्छिममनुष्यप्रतिपादनार्थमाह—'कहि णं भंते!' इत्यादि, क भदन्त! संमूर्च्छिममनुष्याः संमूर्च्छन्ति?, भगवानाह—गौतम! 'अंतो मणुस्सखेत्ते जाव करेंति' इति, अत्र यावत्करणादेवं परिपूर्णः पाठः—"अंतो मणुस्सखेत्ते पणयाली-

साए जोयणसयसहस्सेसु अड्ढाइज्जेसु दीवसमुद्देसु पन्नरससु कम्मभूमीसु तीसाए अकम्मभूमीसु छप्पण्णाए अंतरदीवेसु गब्भवक्कंतियमणुस्साणं चेव उच्चारेसु वा पासवणेसु वा खेलेसु वा सिंघाणएसु वा वंतेसु वा पित्तेसु वा सोणिएसु वा सुक्केसु वा सुक्कपोग्गलपरिसाडेसु वा विगयजीवकलेवरेसु वा थीपुरिससंजोगेसु वा नगरनिद्धमणेसु वा सव्वेसु चेव असुइट्ठाणेसु, एत्थ णं संमुच्छिममणुस्सा संमुच्छंति अंगुलस्स असंखेज्जइभागमेत्ताए ओगाहणाए असन्नी मिच्छादिट्ठी सव्वाहिं पज्जत्तीहिं अपज्जत्तगा अंतोमुहुत्ताउया चेव कालं करेंति " एतच्च निगदसिद्धम् ॥ सम्प्रति शरीरादिद्वारप्रतिपादनार्थमाह—'**तेसि णं भंते!**' शरीराणि त्रीणि औदारिकतैजसकार्मणानि, अवगाहना जघन्यत उत्कर्षतश्चाङ्गुलासङ्ख्येयभागप्रमाणा, संहननसंस्थानकपायलेश्याद्वाराणि यथा द्वीन्द्रियाणां, इन्द्रियद्वारे पञ्चेन्द्रियाणि, सञ्ज्ञिद्वारवेदद्वारे अपि द्वीन्द्रियवत्, पर्याप्तिद्वारेऽपर्याप्तयः पञ्च, दृष्टिदर्शनज्ञानयोगोपयोगद्वाराणि (यथा) पृथिवीकायिकानां, आहारो यथा द्वीन्द्रियाणां, उपपातो नैरयिकदेवतेजोवाय्वसङ्ख्यातवर्षायुष्कवर्जेभ्यः, स्थितिर्जघन्यत उत्कर्षतोऽप्यन्तर्मुहूर्त्तप्रमाणा, नवरं जघन्यपदादुत्कृष्टमधिकं वेदितव्यं, मारणान्तिकसमुद्घातेन समवहता अपि म्रियन्ते असमवहताश्च, अनन्तरमुद्वृत्य नैरयिकदेवासङ्ख्येयवर्षायुष्कवर्जेषु शेषेषु स्थानेषूत्पद्यन्ते, अत एव गत्यागतिद्वारे द्व्यागतिका द्विगतिकास्तिर्यग्मनुष्यगत्यपेक्षया, 'परीत्ताः' प्रत्येकशरीरिणोऽसङ्ख्येयाः प्रज्ञप्ताः, हे श्रमण! हे आयुष्मन्!, उपसंहारमाह—'**सेत्तं संमुच्छिममणुस्सा**' ॥ उक्ताः संमूर्च्छिममनुष्याः, अधुना गर्भव्युत्क्रान्तिकमनुष्यानाह—अथ के ते गर्भव्युत्क्रान्तिकमनुष्याः?, सूरिराह—गर्भव्युत्क्रान्तिकमनुष्यास्त्रिविधाः प्रज्ञप्ताः, तद्यथा—कर्मभूमका अकर्मभूमका अन्तरद्वीपजाः, तत्र कर्म—कृपिवाणिज्यादि मोक्षानुष्ठानं वा कर्मप्रधाना भूमिर्येषां ते कर्मभूमाः आर्षत्वात्समासान्तोऽप्रत्ययः, कर्मभूमा एव कर्मभूमकाः, एवमकर्मा—यथोक्तकर्मविकला भूमिर्येषां तेऽ-

कर्मभूमास्त एवाकर्मभूमकाः, अन्तरशब्दो मध्यवाची, अन्तरे—लवणसमुद्रस्य मध्ये द्वीपा अन्तरद्वीपास्तद्गता अन्तरद्वीपगा', 'एवं माणुस्सभेयो भाणियव्वो जहा पण्णवणाए' इति, 'एवम्' उक्तेन प्रकारेण मनुष्यभेदो भणितव्यो यथा प्रज्ञापनायां, स चातिबहुग्रन्थ इति तत एव परिभावनीयः, 'ते समासतो' इत्यादि पर्याप्तापर्याप्तसूत्रं पाठसिद्धं, शरीरादिद्वारकलापचिन्तायां शरीरद्वारे पञ्च शरीराणि, तद्यथा—औदारिकं वैक्रियमाहारकं तैजसं कार्मणं च, मनुष्येषु सर्वभावसम्भवात्, अवगाहनाद्वारे जघन्यतोऽवगाहना अङ्गुलासङ्ख्येयभागमात्रा उत्कर्षतस्त्रीणि गव्यूतानि, संहननद्वारे षडपि संहननानि, संस्थानद्वारे षडपि संस्थानानि, कषायद्वारे क्रोधकषायिणोऽपि मानकषायिणोऽपि मायाकषायिणोऽपि लोभकषायिणोऽपि अकषायिणोऽपि, वीतरागमनुष्याणामकषायित्वात्, सञ्ज्ञाद्वारे आहारसञ्ज्ञोपयुक्ता भयसञ्ज्ञोपयुक्ता मैथुनसञ्ज्ञोपयुक्ता लोभसञ्ज्ञोपयुक्ता., नोसञ्ज्ञोपयुक्ताश्च निश्चयतो वीतरागमनुष्याः, व्यवहारतः सर्व एव चारित्रिणो, लोकोत्तरचित्तलाभात्तस्य सञ्ज्ञादशकेनापि विप्रयुक्तत्वात्, उक्तञ्च—"निर्वाणसाधकं सर्वं, ज्ञेयं लोकोत्तराश्रयम् । सञ्ज्ञा लोकाश्रया सर्वाः, भवाङ्कुरजलं परम् ॥ १ ॥" लेश्याद्वारे कृष्णलेश्या नीललेश्याः कापोतलेश्यास्तेजोलेश्या. पद्मलेश्याः शुक्ललेश्या अलेश्याश्च, तत्रालेश्याः परमशुक्लध्यायिनोऽयोगिकेवलिन. । इन्द्रियद्वारे श्रोत्रेन्द्रियोपयुक्ता यावत्स्पर्शनेन्द्रियोपयुक्ता नोइन्द्रियोपयुक्ताश्च, तत्र नोइन्द्रियोपयुक्ताः केवलिनः, समुद्घातद्वारे सप्तापि समुद्घाताः, मनुष्येषु सर्वभावसम्भवात्, समुद्घातसङ्ग्राहिका चेमा गाथा—"वेयणकसायमरणंतिए य वेउव्विए य आहारे । केवलियसमुग्घाए सत्त समुग्घा इमे भणिया ॥ १ ॥" सञ्ज्ञिद्वारे सञ्ज्ञिनोऽपि नोसञ्ज्ञिनोअसञ्ज्ञिनोऽपि, तत्र नोसञ्ज्ञिनोअसञ्ज्ञिन केवलिनः । वेदद्वारे स्त्रीवेदा अपि पुरुषवेदा अपि नपुंसकवेदा

१ वेदन कषाय मारणान्तिकश्च वैक्रयिकश्चाहारक । कैवलिक समुद्घात सप्त समुद्घाता इमे भणिता ॥ १ ॥

भापामनःपर्याप्त्योरेकत्वेन विवक्षणात्, दृष्टिद्वारे त्रिवि-
अपि अवेदाः—सूक्ष्मसम्परायादय', पर्याप्तिद्वारे पञ्च पर्याप्तयः पञ्चापर्याप्तयः, दर्शनद्वारे चतुर्विधदर्शनाः, तद्यथा—चक्षुर्दर्शना
धदृष्टयः, तद्यथा—केचिन्मिथ्यादृष्टयः केचित्सम्यग्दृष्टय' केचित्सम्यग्मिथ्यादृष्टयः, मिथ्यादृष्टयोऽज्ञानिनः सम्यग्दृष्टयो ज्ञानिनः, 'नाणाणि
अचक्षुर्दर्शना अवधिदर्शनाः केवलदर्शनाः, ज्ञानद्वारे ज्ञानिनोऽज्ञानिनश्च, तत्र मिथ्यादृष्टयोऽज्ञानिनः सम्यग्दृष्टयो ज्ञानिनः, 'नाणाणि
पंच तिण्णि अण्णाणाणि भयणाते' इति, ज्ञानानि पञ्च मतिज्ञानादीनि, अज्ञानानि त्रीणि मत्यज्ञानादीनि, तानि भजनया वक्तव्यानि,
सा च भजना एवम्—केचिद्द्विज्ञानिनः केचित्त्रिज्ञानिनः केचिच्चतुर्ज्ञानिन' केचिदेकज्ञानिनः, तत्र ये द्विज्ञानिनस्ते नियमादाभिनिबोधि-
कज्ञानिनः श्रुतज्ञानिनश्च, ये त्रिज्ञानिनस्ते मतिज्ञानिनः श्रुतज्ञानिनोऽवधिज्ञानिनश्च, अथवाऽऽभिनिबोधिकज्ञानिनः श्रुतज्ञानिनो
मनःपर्यवज्ञानिनश्च, अवधिज्ञानमन्तरेणापि मनःपर्यवज्ञानस्य सम्भवात्, सिद्धप्राभृतादौ तथाऽनेकशोऽभिधानात्, ये चतुर्ज्ञानिनस्ते
आभिनिबोधिकज्ञानिनः श्रुतज्ञानिनोऽवधिज्ञानिनो मनःपर्यवज्ञानिनश्च, ये एकज्ञानिनस्ते केवलज्ञानिनः, केवलज्ञानसद्भावे शेषज्ञानाप-
गमात्, "नट्ठंमि उ छाउमत्थिए नाणे" इति वचनात्, ननु केवलज्ञानप्रादुर्भावे कथं शेषज्ञानापगमः?, यावता यानि शेषाणि मत्या-
दीनि ज्ञानानि स्वस्वावरणक्षयोपशमेन जायन्ते ततो निर्मूलस्वस्वावरणविलये तानि सुतरां भवेयुश्चारित्रपरिणामवत्, उक्तञ्च—"आ-
वरणदेसविगमे जाइं विज्जंति मइसुयाईणि । आवरणसव्वविगमे कह ताइं न होंति जीवस्स? ॥ १ ॥" उच्यते, इह यथा जात्यस्य
मरकतादिमणेर्मलोपदिग्धस्य यावन्नाद्यापि समूलमलापगमस्तावद् यथा यथा देशतो मलविलयस्तथा तथा देशतोऽभिव्यक्तिरुपजायते,
सा च क्वचित्कदाचित्कथञ्चिद्भवतीत्यनेकप्रकारा, तथाऽऽत्मनोऽपि सकलकालकलाकलापावलम्बिनिखिलपदार्थसार्थपरिच्छेदकरणैकपार-

१ नष्टे तु छाद्मस्थिके ज्ञाने २ आवरणदेशविगमे यदि तानि भवन्ति मतिश्रुतादीनि । सर्वावरणविगमे कथ तानि न भवन्ति जीवस्य? ॥ १ ॥

मार्थिकस्वरूपस्याप्यावरणमलपटलतिरोहितस्य यावन्नाद्यापि निखिलकर्ममलापगमस्तावद् यथा यथा देशत. कर्ममलोच्छेदस्तथा तथा तस्य विज्ञप्तिरुज्जृम्भते, सा च कचित्कदाचित्कथञ्चिदनेकप्रकारा, उक्तञ्च—"मलविद्धमणेर्व्यक्तिर्यथाऽनेकप्रकारत. । कर्मविद्धात्मविज्ञप्तिस्तथाऽनेकप्रकारत: ॥ १ ॥" सा चानेकप्रकारता मतिश्रुतादिभेदेनावसेया, ततो यथा मरकतादिमणेरशेषमलापगमसम्भवे समस्तासपष्टदेशव्यक्तिव्यवच्छेदेन परिस्फुटरूपैकाभिव्यक्तिरुपजायते तद्वदात्मनोऽपि ज्ञानदर्शनचारित्रप्रभावतो नि.शेषावरणप्रहाणावशेपदेशज्ञानव्यवच्छेदेनैकरूपाऽतिपरिस्फुटा सर्ववस्तुपर्यायप्रपञ्चसाक्षात्कारिणी विज्ञप्तिरुल्लसति, उक्तञ्च—"यथा जात्यस्य रत्नस्य, नि.शेषमलहानित. । स्फुटैकरूपाऽभिव्यक्तिर्विज्ञप्तिस्तद्वदात्मन ॥ १ ॥" इति, येऽज्ञानिनस्ते द्व्यज्ञानिनस्त्र्यज्ञानिनो वा; तत्र ये द्व्यज्ञानिनस्ते मत्यज्ञानिन श्रुताज्ञानिन:, ये त्र्यज्ञानिनस्ते मत्यज्ञानिन श्रुताज्ञानिनो विभङ्गज्ञानिनश्च । योगद्वारे मनोयोगिनो वाग्योगिन. काययोगिनोऽयोगिनश्च, तत्रायोगिन शैलेशीमवस्थां प्रतिपन्ना', उपयोगद्वारमाहारद्वारं च द्वीन्द्रियवत्, उपपात एवंस्वध.सप्तमनरकादिवर्जेभ्य:, उक्तञ्च—"सत्तममहिनेरइया तेऊ वाऊ अणंतरुव्वट्टा । नवि पावे माणुस्सं तहेवऽसंखाउया सव्वे ॥ १ ॥" इति, स्थितिद्वारे जघन्यत: स्थितिरन्तर्मुहूर्त्तमुत्कर्पतस्त्रीणि पल्योपमानि, समुद्घातमधिकृत्य मरणचिन्तायां समवहता अपि म्रियन्ते असमवहता अपि, च्यवनद्वारेऽनन्तरमुद्धृत्य सर्वेपु नैरयिकेपु सर्वेपु च तिर्यग्योनिपु सर्वेपु मनुष्येपु सर्वेपु देवेष्वनुत्तरोपपातिकपर्यवसानेपु गच्छन्ति, 'अत्थेगइया सिज्झंति जाव अंतं करेंति' इति, अस्तीति निपातोऽत्र बहुवचनार्थ., सन्त्येकका ये निष्ठितार्था. भवन्ति यावत्करणात् "बुज्झंति मुच्चंति परिनिव्वायंति सव्वदुक्खाणमंतं करेंती"ति द्रष्टव्यं, तत्राणिमाद्यैश्वर्याप्त्या तथाविधमनुष्यकृत्यापेक्षया निष्ठितार्था इति, अ-

१ सप्तममहीनैरयिका तेजस्कायिका वायुकायिका अनन्तरोद्वृत्ता । नैव प्राप्नुवन्ति मानुष्य तथैवासंख्येयवर्षायुष्का सर्वे ॥ १ ॥